न्चीरुलीपद स्वरभेदांश्चापहंतीति २४६ अथलक्ष्मीआयुष्यमासिकल्पः तत्रैव अथायुःकामोऽयंनस्यामः लक्ष्मीषध
समायुक्तं संवत्सरफलप्रदं बिल्वस्यचूर्णीपुष्पेतुहुतंवारान्सहस्रशः २४७ श्रीसूक्तेननरःकाल्पेससुवर्णदिनेदिने सर्पिर्म
धुसुतालिह्यादलक्ष्मीनाशनपरं २४८ त्वचाबिल्वस्यमूलस्यमूलक्काथंदिनेदिने प्राश्नीयात्त्र्यमासार्धंस्नात्वाहुत्वासमाहितः २४९
दशसाहस्रमायुष्यंस्मृतंयुक्तरथंभवेत् तुलाविशानांक्काथंतुमधुलाजैश्चसंयुतम् २४९ अमोघशतसाहस्रंपुत्तयुक्तरथंस्मृतम्
सुवर्णपद्मबीजानिमधुलाजाःप्रियंगवः २५० गव्येनपयसापीतमलक्ष्मीमतिषेधयेत् नीलोत्पलदलक्काथोगव्येनपयसास्मृतः २५१
ससुवर्णतिलैःसार्द्धमलक्ष्मीनाशनःस्मृतः गव्यंपयःसुवर्णंचमधूच्छिष्टंचमाक्षिकं २५२ पीतंशतसहस्राभिहुतंयुक्तरथंस्मृतं वचा
घृतसुवर्णंचाबिल्वचूर्णमितित्रयम् २५३ मेध्यमायुष्यमारोग्यपुष्टिसौभाग्यवर्धनं वासामूलतुलाक्काथेतैलमावाप्यसाधितम् २५४
हुत्वासहस्रमश्नीयान्मेध्यमायुष्यमुच्यते यावत्कास्तावत्कान्मक्षेद्दभिभूयवांत्तया २५५ पिप्पलीमधुसंयुक्तान्निशाद्वरणव
द्भवेत् मध्वामलकचूर्णानिसुवर्णमितित्रयं २५६ प्राश्यारिष्टगृहीतोऽपिमुच्यतेप्राणसंशयात् शतावरीघृतंसम्यगुपयुक्तंदिनेदिने
२५७ सक्षौद्रंससुवर्णंचनरेंद्रस्थापयेद्वशे गोचंदनामोहनिकामधुकंमाक्षिकंमधु २५८ सुवर्णमितिसंयोगःपयःसौम्यमिच्छता प
द्मनीलोत्पलक्काथयष्टीमधुकसंयुते २५९ सर्पिरास्वादितंगव्यंससुवर्णंसदापिबेत् पयश्चानुपिबेत्सिद्धंतेपानेवसमुद्भवे २६० अलक्ष्मी
प्रसदायुष्यराज्यायसुभगायच यत्नेनोदीरितोमन्त्रोयोगेष्वेतेषुसाधने २६१ शांतिर्वातंसर्वंप्रणायनीश्चिरदीभवेत् पाप्मानंना
शयत्येतास्युश्चौषधयःश्रियम् २६२ कुर्युर्नागबलंचापिमनुष्यममरोपमम् सततंचाध्ययनंवादःपरतन्त्रावलोकनं २६३ तद्वि
द्याचार्यसेवाचबुद्धिमेधाकरोगणः आयुष्यंभोजनंजीर्णेवेगानांचाविधारणं २६४ ब्रह्मचर्यमहिंसाचसाहसानांचवर्जनम् २६५

अथसोमकन्दकल्पः सुश्रुतेएकोनत्रिंशत्तमेऽध्याये अथातःस्वभावव्याधिप्रतिषेधनीयंरसायनंव्याख्यास्यामः ब्रह्मा
ऽसृजत्पूर्वममृतंसोमसंज्ञितं जरामृत्युविनाशायविधानंतस्यवक्ष्यते २६६ एकएवखलुभगवान्सोमःस्थाननामाकृतिवीर्यवि

वोषैश्चतुर्विंशतिधाभिद्यते तद्यथा अंशुमान्मुंजवांश्चैव चन्द्रमा रजतप्रभः दूर्वासोमः कनीयांश्च श्वेताक्षः कनकप्रभः २६७
प्रतानवांस्तालवृंतः करवीरोंऽशवानपि स्वयंप्रभो महासोमो यश्चापि गरुडाहृतः २६८ गायत्र्यस्त्रैष्टुभः पांक्तो जागतः शांकरस्त
था अग्निष्टोमो रैवतश्च यथोक्त इति संज्ञितः २६९ गायत्र्यात्रिपदा युक्तो यश्चोडुपतिरुच्यते एते सोमाः समाख्याता वेदोक्तैर्नामभिः
शुभैः २७० सर्वेषामेव चैतेषामेको विधिरुपासने सर्वे तुल्यगुणाश्चैव विधानं तेषु वक्ष्यते २७१ अतोन्यतमं सोममुपयुयुक्षुः सर्वोप
करणपरिचारकोपेतः प्रशस्तदेशे त्रिवृत्तमागारं कारयित्वा हृतदोषः प्रतिसंसृष्टभक्तः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु अंशुमंतमा
दायाध्वरकल्पेनाहृतमभिषुतमभिहुतं चांतरागारे कृतमण्डलः सोमकन्दं सुवर्णसूच्या विदार्य पयो गृह्णीयात्सौवर्णपात्रेऽञ्जलिमा
त्रं ततः सकृदेवोपयुंजीत नास्वादयेत्ततउपस्पृश्य शेषमप्स्ववसाद्य यमनियमाभ्यामात्मानं संयोज्य वाग्यतोऽभ्यंतरतः सुहृद्भिरु
पास्यमानो विहरेत् रसायनं पीतवांस्तु निवाते तन्मनाः शुचिः आसीत तिष्ठेत्क्रामेद्वा न कथंचन संविशेत् २७२ सायंवामुपकृतवान्
श्रुतशांतिः कुशशय्यायां कृष्णाजिनोत्तरायां सुहृद्भिरुपास्यमानः शयीत तृषितो वा शीतोदकमात्रां पिबेत् ततः प्रातरुत्थायोपश्रुत
शान्तिः कृतमंगलो गां स्पृष्ट्वा तथैवासीत तस्य जीर्णे सोमे छर्दिरुपपद्यते ततः शोणितांक्तं कृमिव्यामिश्रं छर्दितवतः सायं श्रुतशीतं क्षीरं वि
तरेत् ततस्तृतीयेऽहनि कृमिव्यामिश्रमतिसार्यते स तेनानिष्टप्रतिग्रहभुक्तप्रभृतिभिर्विशेषैर्मुक्तः शुद्धतनुर्भवति ततः सायं स्ना
तस्य पूर्ववदेव क्षीरं वितरेत् क्षौमवस्त्रास्तृतायां चैनं शय्यायां शाययेत ततश्चतुर्थेऽहनि श्वयथुरुपद्यते ततः सर्वांगेभ्यः कृमयो
निष्क्रामन्ति तदहश्च शय्यायां पांशुभिरवकीर्यमाणः शयीत ततः सायं पूर्ववदेव क्षीरं वितरेत् एवं पंचमषष्ठयोर्दिवसयोर्वर्त्तेत केव
लमुभयकालमस्मै क्षीरं वितरेत्ततः सप्तमेहनि निर्मांसस्त्वगस्थिभूतः केवलं परिग्रहादेवोच्छ्वसीति तदहश्च क्षीरेण सुखोष्णे
न परिषिच्य तिलमधुकचंदनानुलिप्तदेहं पाययेत् ततोऽष्टमेऽहनि प्रातरेव क्षीरपरिषिक्तं चंदनप्रदिग्धगात्रं पयः पाययित्वा पां
शुशय्यां समुत्सृज्य क्षौमास्तृतायां शाययेत्ततो मांसमाप्यायते त्वक् चावदलति दंतनखरोमाणि चास्य पतंति तस्य नवमादि

यसात्प्रभृत्यणुतैलाभ्यंगः सोमवल्ककषायपरिषेकः ततो दशमेऽहन्येतदेवावितरेत ततोऽस्यत्वक् स्थिरतामुपैति एवमेकाद
शद्वादशयोर्वर्त्तेत तत्त्रयोदशात्प्रभृतिसोमवल्ककषायपरिषेकः एवमाषोडशाद्वर्त्तेत ततः सप्तदशाष्टादशयोर्दिवसयोर्दशना
जायन्तेऽशिखरिणः स्निग्धवज्रवैडूर्यस्फटिकनिकाशाः समाः स्थिराः सहिष्णवः तदाप्रभृतिन्चानवैः शालितण्डुलैः क्षीरयवागू
मुपसेवेत यावत्पंचविंशतिरिति ततोऽस्मै दद्याच्छाल्योदनं मृदूभयकालं पयसा ततोऽस्य नखाजायन्ते विद्रुमेन्द्रगोपकत
रुणादित्यप्रकाशाः स्थिराः स्निग्धाः लक्षणसम्पन्नाः केशाश्च जायन्ते त्वक्चनीलोत्पलातसीपुष्पवैडूर्यप्रकाशा ऊर्ध्वंचमा
सात्केशान्वापयेद्वापयित्वाचोशीरचन्दनकृष्णातिलकल्कैः शिरः प्रदिह्यात् पयसाचास्नापयेत् ततोऽस्यानन्तरं सप्तरात्रात्केशा
जायन्ते भ्रमरांजननिभाः कुंचिताः स्निग्धास्ततस्त्रिरात्रात्प्रथमपरिसरान्निःक्रम्यमुहूर्त्तंस्थित्वापुनरेवान्तः प्रविशेत् ततो
ऽस्यबलातैलमभ्यंगार्थेऽवचार्यम् यवपिष्टमुद्वर्त्तनार्थेसुखोष्णंचपयः परिषेकार्थे अजकर्णकषायमुत्सादनार्थे सोशीरं
कूपोदकंस्नानार्थेचन्दनमनुलेपनार्थे आमलकरसविमिश्राश्चास्ययूषसूपविकल्पाः क्षीरमधुकासिद्धंचकृष्णातिलमा
वचारणार्थे एवंदशरात्रंततोऽन्यद्दशरात्रं द्वितीये परिसरे वर्त्तेत ततस्तृतीये परिसरे स्थिरीकुर्वन्नात्मानमन्यद्दशरात्रमा
सीत किंचिदातपपवनान्सेवेत पुनश्चान्तः प्रविशेत् नचात्मानमादर्शेषुवा निरीक्षेत रूपशालित्वात् ततोऽन्यद्दशरात्रं
क्रोधादीन्परिहरेदेवंसर्वेषामुपयोगः विशेषस्तु वल्लीप्रतानक्षुपादयः सोमाभक्षयितव्याः प्रमाणमर्धंचतुर्थमुष्टयः अं
शवन्तंसौवर्णेपात्रेऽभिषुणुयात् चन्द्रमसंराजतेचोपयुज्यात्‌गुणमैश्वर्यञ्चाप्यैशानन्देवमनुप्रविशति शेषांस्तु ताम्र
मृण्मयेवारोहितेवाचर्मणिविततेशूद्रवर्ज्जैस्त्रिभिर्वर्णैः सोमाउपयोक्तव्याः ततश्चतुर्थेमासे पौर्णमास्यांशक्त्वोद्देशंब्राह्मणा
नर्चयित्वाकृतमंगलोनिःक्रम्ययथोक्तंव्रजेदिति ओषधीनांपतिंसोममुपयुज्यविचक्षणः दशवर्षसहस्राणि नवान्धारय
तेतनुम् २७३ नाग्निर्नतोयंनविषंनशस्त्रंनास्त्रमेवच तस्यालमायुःक्षपणेसमर्थाश्चभवंतिहि २७४ भद्राणांषष्टिव

र्णिणांप्रस्तुतानामनेकधा कुंजराणांसहस्रस्यबलंसमधिगच्छति २७५ क्षीरोदंराक्षसदनमुत्तरांप्यकुरूनपि यत्रेच्छंति
गन्तुंबालश्चाप्रतिहतागतिः २७६ कन्दर्पइवरूपेणकान्त्याचन्द्रइवापरः प्रल्हादयतिभूतानांसमनांसिमहाद्युतिः २७७
सांगोपांगांश्चनिखिलान्वेदान्विन्दन्तितत्वतः चरत्यमोघसंकल्पोदेववच्चाखिलंजगत् २७८ सर्वेषामेवसोमानांपत्राणि
दशपंचच तानिशुक्लेचकृष्णेचजायंतेनिपतंतिच २७९ एकैकंजायतेपत्रंसोमस्याहरहस्तथा शुक्लस्यपौर्णमास्यांतुभ
वेत्पंचदशच्छदः २८० शीर्यतेपत्रमेकैकंदिवसेदिवसेपुनः कृष्णपक्षक्षयेचापिलताभवतिकेवला २८१ अंशुमान्
ज्यगन्धस्तुकन्दवान्रजतप्रभः कदल्याकारकन्दस्तुमुंजवाल्लशुनच्छदः २८२ चन्द्रमाः कनकाभासोजलेचरतिसर्व
दा गरुडाहृतनामाचश्वेताक्षश्चापिपाण्डुरो २८३ सर्पनिर्मोकसदृशौतौवृक्षाग्रावलंबिनौ तथान्येमण्डलैश्चित्रैश्चित्रि
ताइवभान्तिते २८४ सर्वएवतुविज्ञेयाःसोमाःपंचदशच्छदाः क्षीरकन्दलतावंतःपत्रैर्नानाविधैःस्मृताः २८५ हिमवत्य
र्बुदे सह्येमहेन्द्रेमलयेतथा श्रीपर्वतेदेवगिरौगिरौदेवसहेतथा २८६ पारिपात्रेचविंध्येचदेवसुंदेह्रदेतथा उत्तरेणचित
स्तायाःप्रवृद्धायेमहीधराः २८७ पंचतेषामधोमध्येसिन्धुनामामहानदः हंसवत्प्लवतेतत्रचन्द्रमाःसोमसत्तमः २८८
तस्योद्देशेषुचाप्यस्तिमुंजवानंशुमानपि काश्मीरेषुसरोदिव्यंनाम्नाक्षुद्रकमानसं २८९ गायत्र्यस्त्रैष्टुभःपांक्तोजागतः
शांकरस्तथा अन्येसंत्यपरेचापिसोमाःसोमसमप्रभाः २९० नतान्पश्यंत्यधर्मिष्ठाः कृतघ्नाश्चापिमानवाः भेषजद्वेषिणः
श्चापिब्राह्मणद्वेषिणस्तथा २९१ अथानेकविधकल्पानाह योगरत्नमालायांषष्ठपरिच्छेदे जयतिजगदशेषं
द्योतयन्विश्वभासाविशदकिरणकांतिःप्रस्फुरच्चन्द्रमौलिः विविधमणिमयाहिप्रोल्लसच्चारुहारः सततसमितलेजोज्ञान
मूर्तिर्महेशः २९२ सविकल्पधियांपुंसांयोगोमन्त्रोमहौषधं नासिध्यतियथादर्शेमलिनेप्रतिरूपकं २९३ कियंतोप्यथव
क्ष्यामिकल्पानीशागमोदितान् वन्ध्याकर्कोटिकाकन्याव्याघ्रपादीकुमारिका २९४ योगेश्वरीतिनामानितंत्रेप्रोक्ता

निशंभुना सर्पगोनासमार्ज्जारशृगालकपिमूषकैः २९५ दष्टस्यदंशलेपेन पानेनापिविषंव्रजेत् दद्रुपिटककुष्टानि गण्ड
मालाविचर्चिका २९६ लूताकीटविसर्पाश्चलेपमात्रेणनाशयति कुमारीकंदजंचूर्णसकुष्टंरजनीद्वयं २९७ लेपतःशिरसः
पिन्डान्हन्तिकुष्टंनिशाद्वयं कर्कोटीमधुयष्टीचकदलीक्षारसंयुतं २९८ रोहणंदुष्टनाडीनांसिध्मकेहन्तिलेपयुक् पाण्डु
रोगंप्रमेहंचतक्रंपीतंनिवारयेत् २९९ रुदंतीनामविख्याताजराव्याधिविनाशिनी चणमात्रसमैःपत्रैर्युक्ताभाविंदुवर्षि
णी ३०० चतुर्विधाचसाज्ञेयारक्तपीतासितासिता सारोदतीजनान्दृष्ट्वाजम्याजर्ज्जरीकृतान् ३०१ तामोषधींसमा
दायशुक्लपक्षेशुभेदिने पत्रमूलान्वितांप्राज्ञःछायाशुष्कंतुकारयेत् ३०२ विरेकंवमनंकृत्वाविडालपदमात्रया भक्ष
येन्मधुसर्पिर्भ्यांमासमेकंमहौषधं ३०३ जीर्णायांभोजनंकुर्यात्क्षीरान्नेनैवसंयमी दृढकायोतितेजस्वीपरमायुर्नरो
भवेत् ३०४ पथ्यासैन्धवकृष्णानांकल्कमुष्णांबुनापिबन् विरेकःसर्वरोगघ्नःश्रेष्ठोनाराचसंज्ञकः ३०५ कणाम
दनमसिंधृयुतंमधुसमन्वितं पाययेन्मधुकक्काथमेतद्वमनमुत्तमं ३०६ स्निग्धच्छिन्नंनरंसम्यग्जानुमात्रासनेस्थितं कंठ-
मेरंडनालेनस्पृशंतंवामयेद्भिषं ३०७ भूकंदवास्त्रिधाप्रोक्तःशुक्लोरक्तोसितस्तथा पुष्येभानौसितेपक्षेसमूलेपल्लवान्वितं ३०८
गृहीत्वाशोषयित्वाथच्छायायांसूक्ष्मचूर्णितं सुतिथौशुभनक्षत्रेसार्पिषासहभक्षयेत् ३०९ जीर्णेतत्राथभोक्तव्यंजीरान्नेनिपते
डितेः षण्मासंयोगतोयांतिवलयःपलितानिवा ३१० घृतेनमधुनायुक्तःपित्तंजलसमन्वितः जलोदरंचतक्रेणदध्नागुल्मं
पयोन्वितं ३११ कुष्टंसद्वाज्यसंयुक्तोभुक्तोनिःशेषरोगहृत् भक्षणेभूकदंबस्यमन्त्रःश्रीशंभुनोदितः ३१२ ॐ अमृतोद्भवा
यामृतंमेकुरु२स्वाहा मण्डूकपर्णिकाग्राह्याशुक्लपक्षेशुभेदिने ३१३ पत्रमूलान्विताशोष्याच्छायायांकृतचूर्णिका काञ्जि
केनसमालोड्यतच्चूर्णंभक्षयेन्नरः ३१४ एकमासप्रयोगेणसर्वरोगैर्विमुच्यते षण्मासंमधुसर्पिर्भ्यांभुक्त्वापलितनाशिनी
३१५ परासुःकारिणीदिव्यादृढकायंविधायिनी समूलपत्रमुत्पाद्यच्छायाशुष्कंतुकारयेत् ३१६ कटुत्रयेणसंयुक्तंघृतेनमधुना

सह चित्रकंभक्षयेत्प्रातः विडालपदमात्रया ३१७ षण्मासयोगतोयांतिविलयः पलितानिच पाण्डुरोगमपस्मारंजलोदरभ
गोदरं ३१८ प्रमेहंकुष्टरोगंचहन्तिवान्हिनिषेवितः हरीतक्यास्त्रयोभागाशिवाद्वादशभागिका ३१९ षड्भागस्यबिभीतस्यात्रि
फलेयंप्रकीर्त्तिता खदिरस्यांभसासप्तरात्रोभृंगरसेनवा ३२० विडंगपयसासप्तसप्तब्राह्मीरसेनवा त्रिफलांभावयित्वेत्थंभ
क्षयेत्गुडसर्पिषा ३२१ कासश्वासमजीर्णंचक्षुधामांद्यंनिवारयेत् षण्मासयोगतोनूनंदिव्यदेहंनरोभवेत् ३२२ एवंसंवत्सरेप्राप्ते
पलितंवलिताहरेत् वाकुचीबीजचूर्णंचधात्रीफलरसान्वितं ३२३ प्रातःकालेत्रीतिंजीर्णेभोजनंमधुसर्पिषा मासमात्रप्रयोगेण
जायतेवलिवर्जितः ३२४ पलितंहन्तिषण्मासंसर्वरोगांस्तुवत्सरात् पुनर्नवाशिफाचूर्णंपलार्द्धंपयसासह ३२५ वृद्धोपियःपि
बेन्नूनंसयुवाजायतेनरः मासैकंमासयुग्मंवापीतंजीर्णेचभोजनं ३२६ क्षीरान्नेनविनश्यंतितस्यरोगजरादयः दृढकायोपि
तेजस्वीवाग्मीनासोप्रवाध्यते ३२७ समूलपत्रमुद्धृत्यभृंगराजंशुभेदिनेशुष्कंसंचूर्णितंपुष्येविडालपदमात्रकं ३२८ कांजि
केनसमालोड्यप्रातर्भक्षयतेऽन्वहं एकमासप्रयोगेणसर्वरोगैःप्रमुच्यते ३२९ षण्मासयोगतोहंतिपलितंजरयासह दुग्धान्न
भोजनेसक्ताश्चिरंजीवीनरोभवेत् ३३० पल्लवान्भृंगराजस्यसार्द्रान्कृष्णातिलान्वितान् षष्ठेमासिप्रभुंजानोमुच्यतेपलितैर्नरः
३३१ पुष्पंपत्रंशिफाबीजंपुष्यभानौसमाहरेत् समभागान्वितंचूर्णंखदिराष्टांशवारिणा ३३२ भावितंगोपितंभाण्डेसप्तरात्रं
विधारयेत् तस्मादुद्धृत्यतत्सर्वंभृंगराजरसेनवा ३३३ भावितंचित्रकंविश्वाविडंगंविदकंकणा गोक्षुरोव्याधिघातश्चयथा
सर्षपरोधकं ३३४ मरिचंचक्रमर्दस्यबीजंधात्रीफलंसमं विधायैकत्रसर्वाणिसूक्ष्मचूर्णंतुकारयेत् भक्त्यासम्पूज्यदेवेशं
शुद्धकोष्ठेशुभेदिने ३३५ भक्षयेद्वारिणालोड्यविडालपदमात्रया पयसावानरःप्रातर्हंतिरोगाननेकधा ३३६ पलितैर्वलि
भिर्युक्तोमासिषष्ठेभवेन्नरः अथवामधुसर्पिभ्यांभुक्त्वातसोदकंपिबेत् ३३७ मासमात्रप्रयोगेणहृच्छूलंश्लीपदंज्वरं वा
तगुल्मंशिरःकम्पंवातरोगान्जलोदरं ३३८ अर्शांसिनाशयत्येवराकाम्लक्षारवर्जितः ३३९ ॐनमोभगवतेरुद्रायातिष्ठ

तिष्ठसंग्राहोऽद्भवस्वाहा अथमूहणमन्त्रः ॐनमोरुद्रायअमृतात्मनेठठः अथालोडनमन्त्रः ॐतिष्ठकल्याणिठः
ठः अथभक्षणमन्त्रः कीटादिदोषनिर्मुक्तांवचामादायचूर्णयेत् भक्षयेद्दुग्धसर्पिभ्यांदिनेशुद्धेजलेनवा ३४० चिरायु
र्द्देवकायश्चनरोभवतिनिश्चितं उत्तमांशुण्ठीमादायचूर्णितंवस्त्रगालितं ३४१ गुडेनमधुनागव्यसर्पिषामर्दितंभृशं सु
स्निग्धभाजनेकृत्वाधान्यराशौविधारयेत् ३४२ मासत्रयंसमुद्धृत्यकृत्वाकायविशोधनं सुदिनेभक्षयेत्प्रातर्विडालपदम
त्रया ३४३ दिनसप्तप्रयोगेणसर्वरोगान्विनाशयेत् षण्मासप्रयोगतोजीवेन्नरोवर्षशतद्वयं ३४४ बृहस्पतिसमोबुध्यासर्व
शास्त्रविशारदः नागार्जुनःसमाख्यातःकल्पोयममृताभिधः ३४५ भल्लातरसमादायक्षीरेणसहपाचयेत् तत्क्षीरंमधुस
र्पिभ्यांपिबेत्सप्तदिनावधिं ३४६ सर्वव्याधिविनिर्मुक्तःपरमायुर्नरोभवेत् षण्मासप्रयोगतोहन्तिपलितंवलिनासह ३४७ पा
ठामूलंमुखेक्षिप्तंखड्गसैन्यंचवारयेत् तदेवसर्पिषापीतंविषंसर्पस्यनाशयेत् ३४८ विद्युत्पाततथाकाण्डकारवंशशिखास्थितं
दिव्यस्तंभप्रियत्वंचसर्वेषांकुरुतेतथा ३४९ मूलपत्रसमायुक्तंविशालाभुन्तरामुखः मुक्तकेशोनिराहारःशुभेवारेसमुद्ध
रेत् ३५० कटुत्रयेणसंयुक्तमजामूत्रेणभावितं वटिकांकारयेद्येनललाटेतिलकेकृते ३५१ यःपश्यतिनरोयस्तुतत्संवैकटु
कंभवेत् रक्तचंदनसंयुक्तंवशकृत्सर्वदेहिनां ३५२ रोचनास्थितपुण्ड्रेणसर्वधूर्तेपराजितः धत्तूरफलसंयुक्तंपीतासाज्वर
हारिणी ३५३ ज्वरमोक्षोभवेद्दारनालपलिनदेहिना मैथुनेसुखमध्यस्थावीर्यस्तम्भविधायिनी ३५४ इतिइन्द्रवारुणी
कल्पः यत्रमूलफलोपेतांदेवदालींशुभेदिने उद्धृतचूर्णितवसागालितामृदुवन्हिना ३५५ क्वाथिताआयसेभाण्डेदेह
शुद्धोशुभेदिने मधुसर्पिसमायुक्तांभक्षयेत्संवत्सरं ३५६ अद्भुतंजायतेप्राज्ञःमासेनाखिलरोगहृत् मासद्वयप्रयोगेण
शुचिर्निद्यादिपश्यति ३५७ देवदालीरसंक्षौद्रंसर्पिरामलकीरसं पीत्वात्रिसप्तमेधावीमहाश्रुतिधरोभवेत् ३५८ समूलप
त्रमुद्धृत्यसूक्ष्मचूर्णंविधायच पिबेदुष्णेनतोयेनाविडालपदमात्रया ३५९ प्लीहंभगंदरंवातंगुल्मंकामलमद्भुतं हन्तिगोमूत्र

पीताचासर्वदुःखानिदेहिनां ३६० देवदालीरसंशुद्धंगलंश्वेतसर्षपान् पारदेनधमेच्छीघ्रंतारंस्वर्णंप्रजायते ३६१ देवदालीर
सोगंधपाषाणेनसमन्वितः द्रावयेत्सर्वलोहानि पारदस्यातिबंधकृत् ३६२ कज्जागंधर्वकंथारीदेवदालीभवोरसः मेषतैलान्वि
तोलेपाद्वह्निस्तंभयतेध्रुवं ३६३ समूलपत्रनिर्यासःप्लीहकुष्ठभगंदरं जरंश्वासंहरेत्पीतःपावकस्यापिदीपनः ३६४ देवदालीय
बीजानिगुडेनसहमर्दयेत् तद्वर्त्तिगुदनिक्षिप्ताहन्तिदुर्नामशोषतः ३६५ देवदालीरसेनेत्रेक्षिप्तेपश्यतिमानवः सर्वभूतानिता
न्यस्मैद्रव्यंयच्छत्यभीरवे ३६६ देवदालीरसक्षौद्रंसार्पिर्वामलकीफलं लक्ष्मणायारसंसर्वसतुकालेदिनत्रयं ३६७ पीतंगर्भक
रंशीघ्रंवंध्यानामपियोषितां देवदालिरसःसर्पिःक्षीरंमधुसमन्वितं ३६८ पीतंबाजांश्छिरंकुर्यात्पुंसांकोमलरेतसां ३६९ इतिदे
वदालीसोनकसारायंकल्पः कृष्णाभ्रकंमहानीलीमधुनासमभागतः आलोड्यधारयन्मासांस्निग्धेभाण्डेप्रयत्नतः ३७० सु
दिसुनेभयेत्पथ्याहिडालपदमात्रया मासषट्केनरोमुक्तोवलिभिःपलितैर्भवेत् ३७१ कृष्णाभ्रकंमहानीली गुडूचीमुशलीम
धु समांसमेलितंभिन्नंभक्षयेत्सुदिनेनरः ३७२ संवत्सरप्रयोगेण वृद्धोपितरुणोभवेत् मेधावीबलसंयुक्तोजीवेद्वर्षशतद्वयं ३
७३ कृष्णाभ्रकंमहानीलीकुमारीकाकजंघिका मूलानिबहुमूलाया समभागानिकारयेत् ३७४ मधुनासर्पिषालोड्यसमरा
त्रंविधारयेत् देहप्युद्धोभवेवारंभक्षयेत्क्षीरभोजनः ३७५ वलिभिःपलितैर्मुक्तोवर्षयोगेप्रजायते गोरोचनामहानीलीप्रियं
गुशंखपुष्पकं ३७६ गृहीत्वापुष्यनक्षत्रेसमांसंकनकांबुना वटिकांकारयेत्तिलकपूर्वकंमोहयेज्जगत् ३७७ महानीलीसुग
रंभाकपिलाघृतकज्जलं निशायामंजनंविश्वंमोहयेद्रतिवगतः ३७८ महानीलीयानर्यासोनिर्गुंडीरससंमिश्रितः भूतप्रेतपि
शाचानांहन्तिरक्षविनरध्यति करबद्धंमहानीलीमूलंनित्यज्वरापहं ३७९ सालांगलीमहानीलीयोगजान्केनाहितोवदेत् जपाप
ल्लवपुष्पाणिमहानीलीयुतानिच ३८० तण्डुलांभोनिपीतानिशोणितंभ्रंतियोषितां सगोक्षुरामहानीलीपीतंतण्डुलवारिणा ३८१
मूत्रकृच्छ्रहरीभ्रान्ताभहानीलीमहौषधं इतिमहानीलीकल्पः काकजंघाद्विपाक्षीरापिशाचमन्त्ररोगनुत् ३८२ तस्यां

पत्ररसः क्षीरतैलयुक्तः प्रलेपतः तैलपक्वप्रलेपेन कुर्यात्सर्वाङ्गिकं चान्वितं ३८३ तद्रसापूर्णकर्णस्य बाधिर्य्यमुपशाम्यति कपा
लरोगमभ्यंगात्केतकीरससंमिश्रिता ३८४ सूतामधुसमायुक्तास्तामिरं हन्तिवेगतः तण्डुलोदकसंमिश्रोज्वलागर्दभकः क्रमीत् ३
८५ हंतिकर्णे पुनर्बद्धा चक्षुः पीडाविनाशकृत् एकवीरोद्भवं चूर्णं बिडालपदमात्रया ३८६ अजाक्षीरेणसंयुक्तं भुक्तं पलितनाशनं
छर्दिं हन्ति मधुनायुक्तं देवदालीरसेनच ३८७ जलोदरहरं तैलयुक्तं वातविनाशनं इतिकाकजंघाकल्पः अंकोलबीज
मात्राणां सूक्ष्मचूर्णं विधीयते ३८८ तिलतैलंभवेच्चूर्णं भावितं सप्तवारतः मर्दयित्वाणतोयेन गृह्णीयात्तैलमुत्तमं ३८९ नाना
कर्माणि सिध्यन्ति तैलयोगेनयोगिनां अंकोल्लबीजसंचूर्णं भावयेत्क्षारवारिणा ३९० अपामार्गयुतं सम्यक् भस्माजनविशोषया
त् पुनः सिद्धार्थतैलेन भावितं तद्दुरूखले ३९१ कुट्टितं क्षीरपानीयमर्दितं वस्त्रपीडितं तैलंमुंचतियंत्रेण नानाकर्माणि योषितं
३९२ सिध्यन्ति तेन सूतेन यथा गात्राणि देहिणां इतिअंकोलतैलं पुष्यार्के स्वीकृता शुष्काशानिले पातिच्चूर्णिता ३९३
उष्णोदकेन सापीता देहशुद्धौ शुभेदिने मासमेकं प्रयोगेण सर्वरोगान्निवारयत् ३९४ षण्मासयोगतो हन्ति पलितं मधुभाक्षि
ता गोमूत्रसंयुता भुक्ता सर्वव्याधिकरीन्नृणां ३९५ भुक्तागोसार्पिषा वन्हौ पीतत्वं कुरुते सदा धात्रीफलरसोपेता वाकुचीप
लितापहा ३९६ जीर्णेयत् भोजनं कार्यं क्षीरान्ते सह सार्पिषा इतिवाकुचीकल्पः कुमारीपत्रनिर्यासो घृतेन मधुनासह
३९७ कटुत्रयसमायुक्तः स्वेदितो मृदुवन्हिना मात्रयासह भक्षित्वा हंति रोगाननेकधा ३९८ द्वौमासौ भक्षयद्वस्तु दुग्धा
हारो जितेन्द्रियः दृढकायोतितेजस्वी दिव्यदृष्टिः प्रजायते ३९९ निमान्नभक्षणाद्देहे विषं न प्रभवेन्नृणाम् षण्मासयोग
सामर्थ्यात् वृद्धोपि तरुणो भवेत् ४०० संवत्सरप्रयोगेण जीवेद्वर्षशतद्वयं कुमारीपत्रमादाय गुडेन सह भक्षयेत् ४०१ ब
लिभिः पलितैर्युक्तो जायते वत्सरान्नरः तद्दिदलचणोपेतं प्रत्यहं भाक्षितं द्रुतं ४०२ कण्डूं कंडूं चाक्षि ध्मानि हन्ति पामामनेकधा
तिलतैलेनसंयुक्तमाक्षिरोगविनाशकृत् ४०३ कुमारीरससंयुक्तो हिंगुः पवनरोगहृत् यानिदन्ताकुमारीनि हंति सर्पवि

यद्भूतं ४०४ दुष्टव्रणमलेपेननाशयत्यतिवेगतः इतिकुमारीकल्पः चूर्णंकुष्ठसुरानागकेशराणां घृतान्वितं ४०५
मधुपीतंकरोत्यंगंसौरभंसततंनृणां देवदालीनिवोद्भूतोरसोमधुघृतान्वितः ४०६ पीतःपथ्यासीनःकुर्यान्नीतोसुस्वरं
तामृश मधुसर्पिविडंगानिधात्रीफलसुतासितं ४०७ पलाशबीजचूर्णेन भुक्त्वामासंजराहरेत् मधुसर्पिस्तिलोन्मिश्रंब्राह्मी
वाचूर्णस्यसेवया ४०८ वागीशोमाससमंत्रेण वृद्धोपितरुणोभवेत् धात्रीमधुवाशितासार्पिर्बीजब्रह्मतरोःसमं ४०९सान्नि
समान्वयाभुक्तंनिद्राकालेजरांतिकं चूर्णधात्रीफलोद्भूतसर्पिषामधुनाभसा ४१० लीढंनिशामुचंचक्षुर्नासाश्रवणरो
गहृत् अंकोल्लबीजासिध्यर्थंतैलपात्रेणसाधितं ४११नस्यमुक्त्याजनंकुर्यात्संयुतंपरमायुषा सुस्नातलेहियःकुर्वंतू
र्णंमध्वाज्यसंयुतं ४१२ कठिन्यंसोततरस्तस्यदेहःस्याच्चिरजीवितं मध्वाज्ययवनेनाश्वगंधाकंदरघोन्विता ४१३ शिशिरे
भक्षयेन्मासंवृद्धोऽपितरुणोभवेत् विश्वकायोश्वरामाणिविश्वचूर्णंशिलाजतु ४१४ सक्ताकामधुसर्पिश्चभुक्तंमृत्यु
ज्वरापहं यज्जराव्याधिविध्वंसिभेषजंतद्रसायनं ४१५ अन्येवयासिमध्येवाश्रूद्धकायःसमाचरेत् ॥ ॥अथाग्नि
पुराणोक्तकल्पानाह कल्पान्मृत्युंजयान्वक्ष्येआयुर्दान्रोगमर्दनान् ४१६ त्रिशतीरोगहासेव्यामध्वाज्यात्रिफलायुः
तां पलंपलार्द्धकर्षंवा त्रिफलासकलातथा ४१७ बिल्वतैलस्यनश्यंचमासंपंचशतीकविः रोगापमृत्युवलिजित्तिलं
भल्लातकंतथा ४१८ यवाशिवाकुचीचूर्णंषण्मासंखादिरोदकैः त्वचार्थेःकुष्ठंजयेत्सेव्यंचूर्णंनीलकारंडकं ४१९क्षीरेण
मधुनावापि शतायुःखण्डदुग्धभुक् मध्वाज्यंशुंठीसंसेव्यपलंप्रातःसमृत्युजित् ४२० वलीपलितजित्जीवेन्मण्डु
कीचूर्णंदुग्धपः उच्चटांमधुनाकर्षंपयःपोमृत्युजिन्नरः ४२१ मध्वाज्यैःपयसावापि निर्गुण्डीमृत्युरोगजित् पलाशतैलं
कर्षैकं षण्मासंमधुनापिबेत् ४२२ दुग्धभोजपञ्चशतीसहस्रायुर्भवेन्नरः ज्योतिष्मतीपत्ररसंपयसा त्रिपलंपिबेत् ४
२३ मधुनाचाज्यतस्तद्वच्छतावर्यारसंपलं क्षौद्राज्यैःपयसावापि मृत्युजिन्मुषलीपलं ४२४ पंचांगनिंबचूर्णस्य

खदिरक्काथभावितं ४२५ कर्षं भृंगरसेनापि रोगनुक्षामरोभवेत् रुद्धाग्निकाज्यमधुभुक् दुग्धभोजीचमृत्युजित् ४२६ कर्षं चूर्णं ह
रीतक्याभावितं भृंगराड्रसैः धृतेनमधुनासेव्यं त्रिशतायुश्चरोगाजित् ४२७ धात्रीहिकाभृंगरसलोहं चूर्णं शतावरी साज्यं कर्षं पंच
शतीकान्तचूर्णं शतवरी ४२८ भावितं भृंगराजेन मध्वाज्यैस्त्रिशतीभवेत् ताम्रं मृतं स्रुवं तुल्यं गन्धकं चकुमारिका ४२९ रसोविमृ
द्यते गुंजे साज्यं पंचशताब्दवान् अश्वगन्धाफलं तैलं साज्यं घटं शताब्दवान् ४३० पलं पुनर्नवाचूर्णं मध्वाज्यैः पयसापिबेत् अशो
कचूर्णस्य पलं मध्वाज्यं पयसात्तिनुत् ४३१ निंबस्यतैलं मधुनास्यात्कृष्णा स्यात्कचं शती कर्षं भंगसमध्वाज्यं शतायुः पयसापिबे
त् ४३२ अभयासगुडाजग्धा धृतेनमधुरादिभिः दुग्धानुभुक् कृष्णकेशो रोगीपंचशताब्दवान् ४३३ कटुतुंबीतैलनस्यं क
र्षं शतद्वयाब्दवान् त्रिफलापिप्पलीशुण्ठीसेविनास्त्रिशताब्दकृत् ४३४ शतावर्य्याः पूर्वयोगसहस्त्रायुर्बलान्वितः चित्रकेण त
थापूर्वस्तथाशुण्ठीविडंगतः ४३५ लोहेन भृंगराजेन वलयानवपंचकैः खदिरेणचानिर्गुंड्याकण्टकार्याथवासकृत् ४३६
वर्षाभूर्वानद्रसैर्वा सेवितोवारिकाकृतः सोदकोवाकषायोवाधृतं तैलंचमृत्युजित् ४३७ चूर्णं घृतैर्वामधुनागुडाद्यैर्वारिणात
था ॐ जूंस इतिमन्त्रेण मान्त्रितोयोगराजकः ४३८ मृतसंजीवनीकल्पोयोगोमृत्युंजयोभवेत् सुरासुरैश्चमुनिभिः सेवितोक
ल्पसागराः ४३९ गजायुर्वेदप्रोवाचपालकाप्योगराजकः ४४० अथगन्धकतैलकल्पः श्रीपार्वत्युवाच केनप्रकारे
णुध्यतिकथ्यतांपरमेश्वर कियत्कार्येषु संप्राप्तिर्भक्षणेचारणेपिवा ४४१ श्रीमहादेवउवाच नूतनेस्निग्धभाण्डेचाविस्ती
र्णमुखसुंदरे तन्मध्येगन्धकंदिव्यं भृंगराजमहौषधिं ४४२ तन्मुखेबध्यतेवस्त्रं नूतनंमलवर्जितं तस्योपरिक्षिपेद्दिव्यंगन्ध
कमणिसन्निभं ४४३ चणप्रमाणकैः सर्वैः पूरयेद्वस्त्रमुत्तमं तदोपरिक्षिपेद्दिव्यं खर्परं वन्हिपूरितं ४४४ तद्वन्हौज्वलयेदेनम
ध्येगन्धकमुत्तमं शुद्धं चूर्णं चतंतत्रगृह्यतेगन्धकोत्तमं ४४५ शुद्धगन्धपंचपलं तदर्धंतालकंतथा ३॥ तदर्धंरसराजंचभांत
दर्धंरक्तणंक्षिपेत् ४४६ तदर्धमल्लीनिक्षिप्यत्रीभाव्यंकदलीरसे करवीररसैस्तावद्भाव्यं शोष्यंचपेषयेत् ४४७ निक्षिप्यशुद्धे

इति कान्चपात्रे पुरोकृते मुमतलोपरिस्थे संसिद्धिमुद्राहठनाममधोयानि खन्यक्ष्मानिकरयुग्मसार्द्धं ४४८ तन्मध्यंस्तस्याश्चपु
री भवेयं मुद्रागतागर्तमुखेप्रदेया दिनानिपंचाशततत्रजाते भवेत्तदा तत्त्वकुगन्धतैलं ४४९ निक्षिप्य सन्होकृतातारलोपित्ता
रंप्रयातिसाविमुक्तकांचनं अन्यैरनेकैः किलकर्मसिद्धिः स्वानेप्रदानेन तु कर्मवर्जितः ४५० तत्तैलं क्रमेणैव भक्षयेत्तंदुल
समं तांबूलसहितंतेनक्रमेणैवतुवर्धयेत् ४५१ मासैकेनप्रयोगेणसर्वरोगविवर्जितः पथ्यं दुग्धोदनं गव्यं सदाग्राह्यं च पार्व
ती ४५२ मासद्वयप्रयोगेण वज्रदेहाभवेन्नरः मासत्रयप्रयोगेणवलिपलितनाशनं ४५३ चतुर्थेमासिसंप्राप्ते दिव्यदृष्टिस्तु
जायते मासेपंचमकेनैवसिद्धोभवतिसाधकः ४५४ तेषांमूत्रपुरीषेणशुल्वंभवतिकांचनं षण्मासस्यप्रयोगेणखेचरीगति
माप्नुयात् ४५५ मासेसप्तमकेप्राप्ते दिव्यदेहः प्रजायते मासे चाष्टमके देवि विचरेच्च यथासुखी ४५६ नवमेमासिसंप्राप्ते अनं
तायुः प्रजायते दशमेमासिसंप्राप्ते जायते मत्समो नरः ४५७ किमत्र बहुनोक्तेन किंतु केवलमभोगभाक् ४५८ इतिगन्धक
तैलकल्पः अथज्योतिष्मतीकल्पे प्रथमप्रकारः वंगसेने जगतिज्योतिष्मतिप्रसिद्धगुणिनी तस्यास्तैलंनिष्कास
यित्वाजीर्णेपुराणशाल्यन्नेन मत्स्यंडिमधुरेणपाणितलार्धसंवृध्य प्रत्यहं भक्षयेच्च वर्धयेत्पलं नातः परं विवृद्धिः कार्या
मासंस्थितिश्चैषा पलमप्युत्तममात्राहृता भुक्तबलानुरोधेनाभिषजानुकल्पनीया एवंतैलादकमुपयुज्य महाबलो महाप्राणः
षोडशवर्षाकृतिर्निरोगोभवति इतिज्योतिष्मतीतैलपानविधिः अथज्योतिष्मतीकल्पे द्वितीयप्रकारः मालकांकणीतै
लं हस्तपादयोर्मर्दनेकृते दृष्टितेजवृद्धिर्भवत्याने १ रविवारयुक्तत्रयोदश्यां चतुर्थीदिवसेवातैलंनिष्कासयित्वा तेनतैलेन
दीपेनकज्जलं संगृह्यनेत्रे अंजिते तथा मर्दने कृते अदृश्यो भवति २ अमायां बुधवारे रात्रौ तैलं निष्कास्य ततस्तत्तैलं टंकैकं
टंकैकं वृध्या पंचटंकं भक्षयेत् शरीरे मर्दयेच्च कुष्टनाशो भवति ३ मालकांगुनी बीज शेर १ कृष्णवर्णगोदुग्ध शेर ५ मध्ये
मृत्तिपात्रमध्ये उष्णांकृत्वा पश्चात्सीतले जाते तस्य दधिं कारयेत् ततो मथने कृते नवनीतं निष्कास्य तस्य घृतं कृत्वा तद्

तंटंक१ ओदनगोदुग्धेनसहभक्षयेत् प्रतिदिनं एकैकटंकवृध्या अष्टटंक पर्यंतंवर्धयेत् ततोअष्टटंकं नित्यं एवंदिन४०
पर्यंतंभक्षयेत् श्वेतकेशाश्चेत्कृष्णकेशाभवंति ४ शनिवारेमालकांगुनी गोधूमेनभर्जयेत् ततोदिन४१पर्यंतंभक्षयेत्
विद्याधारणाशक्तिर्भवेत् अष्टबीजानिभक्षितानिचेत् भविष्यज्ञानंभवेत् कानवृद्धिर्भवेत् ५ रविवारयुक्तअमावास्यायां
रात्रौ तैलेनकज्जलगृहीत्वातेनांजितोनरोसर्वंपश्यतिनिधिंचपश्यति ६ मालकांगुनी दिन४०पर्यंतंभासितेतस्यकर्त्तव्य
तासिद्धिर्भवति स्वस्त्रीपरस्त्रीगमनंवर्जयेत् पवित्रतयास्थेयं ७ यथास्त्रियापुरुषंप्रतिकामणंकृतंतदा दुग्धसेर २ माल
कागणी सेर ॥ तन्मध्येपाचयेत् बीजशेषंग्राहयेत् नित्यंबीजानि८ भक्षयेद्दिनानि २८ स्त्रीसंगत्यागः गोधूमान्नभोज
नं कामणनाशः ८ धन्वंतरिर्वदति केवलमालकांगुनीभक्षणेनहृदयशुद्धिर्भवति उत्तमबुद्धिर्भवति प्रयोगेकृतेनित्यंस्नानं
धौतश्वेतवस्त्रपरिधानं तथाबलिर्दद्यात् ततोवस्त्रेणबीजानि ८ हस्तेधृत्वापंचवारंमंत्रेणाभिमंत्रयेत् ततोबीजानि१०
भक्षयेत् दिन४१ प्रतिदिनंबीजानि १० वृद्धितो मानसिकंजानाति सबलताभवति रोगनाशःपलितनाशः नेत्रतेजवृद्धिः
क्षाराम्लंवर्जयेत् मन्त्रः ॐनमोवामयोवाम ह्रींह्रींह्रींह्रीं स्वाहा अनेनमन्त्रेणाभिमंत्रितानि दश१० बीजानि प्रतिदिनं
दशदशवृध्याभक्षयेत् इतिमालकाकणीकल्प [illegible] प्रकारः अथकौमाराभारिकाकल्पंव्याख्यास्यामः कौ
मारस्यौद्रवक्ष्यामितत्वशास्त्रमनुत्तमं येनतत्पीतमात्रेणसिद्धिर्भवति सर्वदा ४५९ अतःपरंप्रवक्ष्यामिप्रथमंचामरिकां
क्रियां जातमात्रस्यबालस्यअसौरस्यविशेषतः ४६० पुरीषंगृह्ययत्नेनछायायांपरिशोषयेत् शुचिस्थानेशुचौदेशेतत्पायि
त्वागुरुर्नाद्भिजान् ४६१ शुद्धदेहनरोभूत्वाक्रियाकर्मसमारभेत् दिनानिसप्तक्षौद्रेणपरिलेह्ययथाविधि ४६२ ग्राम्यधर्मं
त्यजेन्नित्यंभोजनंसर्वकामिकं शाणार्द्धमात्रंशाणंवायावत्सप्तदिनानियः ४६३ एवंप्रयुंजमानस्तुवलीपलीवर्जितः
द्विसप्ताहप्रयोगेणगृध्रदृष्टिर्भवेन्नरः ४६४ पश्यतेचानिधानानिसत्यंसत्यंवदाम्यहं मासमात्रप्रयोगेणजीवेद्वर्षशतंनरः

४६५ वाक्यसिद्धिंचसोभाग्यंलभतेनात्रसंशयः इप्सितंलभतेसर्वंखेचरत्वंचजायते ४६६ अमरिकायामिश्रेणतत्त्वपानेनयोजयेत् स्थावरंजंगमंचैवविषंनश्यतितत्क्षणात् ४६७ कोमारामरिकांचैवकुष्ठेनसहपेषयेत् क्रूरडाकिनीभूताश्चग्रहाश्चैवविशेषतः ४६८ स्पर्शनास्यैवनश्यंतिगरुडेनचपन्नगाः चंदनंजातपुष्पंचामरिकासहपेषयेत् ४६९ तेनैवचांजिताक्षस्तुयंयंपश्यतिमानवः ससवश्योभवेत्क्षिप्रंनात्रकार्याविचारणा ४७० तथामरिकायुक्तंचकोमारंद्रव्यमुत्तमं कर्पूरेणसमायुक्तंतिलकंकारयेद्बुधः ४७१ रणेराजकुलेद्यूतेसभवेदपराजितः सर्वार्थासिध्यतेकार्यैकोमारीकल्पगर्जिते ४७२ इतिकोमारामरिकाकल्पः अथगोमूत्रकल्पः अस्यश्रीज्ञानामृतस्त्राविणीमन्त्रस्य श्रीकृष्णऋषिः अनुष्टुप्छंदः ज्ञानामृतस्त्राविणीर्देवता ग्लांबीजं ग्लींशक्तिः ग्लूंकीलकं ममज्ञानामृतसिध्यर्थंजपेविनियोगः

अथकरन्यासः ॐग्लां अंगुष्ठाभ्यांनमः ॐग्लींतर्जनीभ्यांनमः ॐग्लूंमध्यमाभ्यांनमः ॐग्लैंअनामिकाभ्यांनमः ॐग्लौंकनिष्ठिकाभ्यांनमः ॐग्लः करतलकरपृष्ठाभ्यांनमः एवंहृदयादिन्यासः ॐग्लांहृदयायनमः ॐग्लींशिरसेस्वाहा ॐग्लूंशिखायैवषट् ॐग्लैंकवचायहुं ॐग्लौंनेत्रत्रयायवौषट् ॐग्लः अस्त्रायफट् अथध्यानं ज्ञानामृतजगद्धात्रीज्ञानामृतकरींशुभां पूर्णांदं जगन्माताध्यायेत्त्रिपुरसुंदरीं ४७३ अथमूलमन्त्रः ॐग्लांग्लींग्लूंग्लैंग्लौंग्लः ज्ञानामृतस्त्राविणीदेवतास्वाहा अनेनमन्त्रेणगोमूत्रंपलमात्रं एकविंशतिवारं अभिमन्त्र्यस्यावाक्सिद्धिर्भवतिषाण्मासः

अथचित्रकल्पः गौरीकांचलिकातन्त्रे रक्तचित्रंपलंचैवविडंगंगुडकंतथा एतेषांसमताकुर्यात्पिष्ट्वाचवटिकांचरेत् ४७४ भृंगराजरसेनैवमर्दयेत्तुदिनत्रयम् एकैकादिवसेतस्याएकैकांभक्षयेत्ततः ४७५ एलानिकारकंचैवकलांनागेश्वरंतथा मासैकेव्याधिनाशश्चश्लीपदंचचतुर्थके ४७६ तथैवगलगण्डंचकोशवृद्धिंचनाशयेत् बलपुष्टिप्रदंदेवीषण्मासेकुंजरोपमः ४७७ द्विमासेकांतिवृद्धिश्चकुष्ठंहन्तित्रिमासके बृहस्पतिसमोविद्वान्सप्तमासेभविष्यति ४७८ ममतुल्योभवे·

योगीसंवत्सरंचभक्षणात् अथमण्डूकपर्णीकल्पः तत्रैव मण्डूकपर्णींपुष्यार्कैचोत्पाट्यचसमूलिकाम् प्रक्षाल्यच्छाया
ततःकुर्यात्सूक्ष्मचूर्णानिकारयेत् ४७९ घृतभाण्डेततःस्थाप्ययावत्पुष्यार्कवासरम् बिडालपदकैःस्तुल्यंकाञ्जिकैःसह्यःपिबे
त् ४८० आप्लाव्यसहदुग्धेनमासैकेसर्वरोगहा द्विमासभक्षणाद्देवि पलितंवर्जयेत्तथा ४८१ अथपुनर्नवाकल्पः तत्रैव पु
ष्यार्कदिवसेसौम्येप्रातःश्वेतपुनर्नवाम् समूलपत्रांसंगृह्यसूक्ष्मचूर्णानिकारयेत् ४८२ मर्दयित्वाततःपश्चाद्घृतेनमधुनास
ह भाण्डेनरक्षापयेद्यत्नेयथारक्षाकरस्तथा ४८३ ततोमासान्तरेदेविचम्पककुसुमप्रभम् वसन्तसमयेतस्यशुचिर्भूत्वासमाहि
तः ४८४ मासमेकंभक्षेद्यस्तु मलमूत्रंसगन्धिकम् अलिपद्मोपमाकेशागौरदेहाभवेन्नरा ४८५ बृहस्पतिसमोवाग्मीजीवेत्
पञ्चशताब्दिकम् नास्तितुल्यसमंकल्पंकथितंचपुनर्नवाम् ४८६ स्थिरायुर्भवेद्देहेसेवनात्कल्पमुत्तमम् ईश्वरोवाच
शृणुदेविप्रवक्ष्यामिनिर्गुण्डीकल्पमुत्तमं ४८७ धनधान्यकरीदेवि आयुरारोग्यवर्धिनी शान्तिपुष्टीकरीनित्यंसाक्षाद्देवीस्व
रूपिणी ४८८ निर्गुण्डीतिसमाख्यातासर्वलोकसुखप्रदम् तस्मादहंप्रवक्ष्यामिप्रयोगंशृणुसुंदरि ४८९ अथनिर्गुण्डीक
ल्पः निर्गुण्डीमूलमुद्धृत्यशोभनेनदिनेनतु अष्टादशपलंचूर्णंपलद्वादशसर्पिषम् ४९० मधुषोडशपलंचैवमिश्रीकृत्यवि
धानतः एभिस्तुस्निग्धभाण्डेचमासमेकन्तुसर्वतः ४९१ स्थापयेद्धान्यराशौचमासोर्ध्वंसमुद्धरेत् समभ्यर्च्यगुरुंदेवंपूज
येच्चविधानतः ४९२ ब्राह्मणींचकुमारींचभोजयेच्चयथाविधि तासामादायचादेशंशुचिर्भूत्वाशुभेदिने ४९३ बिडालपदमा
त्रन्तुभक्षयेच्चविधानतः अहन्यहनिभोक्तव्यमिदंभवतिलक्षणम् ४९४ स्कन्धनेत्रं स्वगात्रंचभवेद्वलितमेवच वर्जयेद्वली
पलितंदीर्घजीवीभवेद्ध्रुवम् ४९५ भवतिन्वाक्षयेरेतःस्त्रीशतंरमितुंक्षमः प्रकामंभोजनंतस्यततस्तापैर्नबाध्यते ४९६ आ
हारंमैथुनंनिद्रांस्वेच्छयाचकरोत्यसौ विकारान्मनसःसम्यग्वर्धितेदृश्यतेनरः ४९७ प्रस्थंनिर्गुण्डीचूर्णस्यगोमूत्रेणसमंपिबेत्
दशारात्रप्रयोगेणकुष्ठनाशप्रधानकम् ४९८ नाशयेच्चसदादेविवायोर्मेघमिवाम्बरे निर्गुण्डीश्वेततच्चूर्णैरजामूत्रेणयःपिबेत्

४९९ नरवकेशास्तथादन्ताः समाहेन पतन्तिवै द्विसप्ताहप्रयोगेण योगारोहिविविदं क्रमम् ५०० त्रिसप्ताहप्रयोगेणद्दं भवतिल
क्षणम् नचाग्नौर स्थितेदेविनजलेम्रियतेपिच ५०१ तस्यदेहेन लौहंपकाञ्चनञ्जायतेन्दीति चतुःसप्ताहयोगेनभूमित्यक्ताग
भोव्रजेत् ५०२ निर्गुण्डीचूर्णमादायघृतेनसहभक्षयेत् कुशास्तुदुर्बलोवापिबलवीर्यंभवेद्ध्रुवम् ५०३ निर्गुण्डीचूर्णमादाय
पिबेदुष्णेनवारिणा सप्तरात्रप्रयोगेणकिन्नरैःसहगीयते ५०४ निर्गुण्डीमूलमुद्धृत्यगृहेचधारयेद्बुधः नश्यन्तिसर्वविघ्नानिगृ
हेनागोश्वसर्वशः ५०५ अथभक्षणमन्त्रम् प्रणवञ्चततोमायाकूर्चबीजंफडन्तकम् वह्निजायान्तमन्त्रेणशतधाओषधी
पारि ५०६ जप्त्वातुभक्षयेद्देविकल्पोक्तञ्चफलंभवेत् ॐ ह्रीं हुं फट् स्वाहा मन्त्रोस्तु ॐ ह्रीं हुं फट् स्वाहा तारंमायाद्वयं
कूर्चंफडन्तंवह्निसुन्दरि ५०७ अष्टोत्तरशतंजप्त्वाओषधंभक्षयेत्सुधीः मन्त्रम् ॐ ह्रीं ह्रीं हुं फट् स्वाहा ॐ नमोनामयक्षा
यपापापकुबेरायच वह्निजायान्तमन्त्रेणओषधंभक्षयेत्ततः ओषधंभक्षयेद्देवंसपुष्टिकादनंक्षणम् ५०८ हित्वाक्षारा
म्लादिकंत्रिरात्राभ्यन्तरेततः औषधंभक्षयेद्देवियथोक्तफलमाप्नुयात् ५०९ यावदोषधंभक्षयेत्तावत्क्षारादिकंतथाल
वणस्नेहशाकादिवातातपादिकंत्यजेत् ५१० अथहस्तिकर्णीकल्पः एवमन्यंप्रवक्ष्यामिप्रयोगंशृणुसुन्दरि ओषधंदिव्य
रूपञ्चस्वाहापूर्वंसमुद्धृतम् ५११ हस्तिकर्णीइतिख्यातानाम्नासौसुरपूजितः तस्यभक्षणमात्रेणसर्वरोगात्प्रमुच्यते ५१२ मृ
गेन्द्रश्चयथादृष्ट्वामृगायान्तिपराङ्मुखम् एवमहौषधंप्राप्यव्याधिमान्प्रणश्यति ५१३ सुतिथौचसुनक्षत्रेसुदिनेचसुपूजिते
सुपुष्पैरक्षतैरर्घ्यंदत्वाचैवोत्तरामुखः ५१४ स्वकेतसुमनसाप्राज्ञःसमुद्धृत्यतुधारयेत् ततःपिष्ट्वासुसंस्कृत्यश्लक्ष्णाचूर्णा
निकारयेत् ५१५ सर्पिर्मधुसमायुक्तंघृतभाण्डेनिधापयेत् एकविंशतिरात्रेणसमुद्धृत्यपलाशकम् ५१६ ब्राह्मणंभोजयित्वा
तुस्वस्तीतिवाचयेत्ततः दुग्धेनचसमायुक्तंअहन्यहनिभक्षयेत् ५१७ पलंभक्षणमात्रेणवलीपलितवर्जितः श्रुतिधरोम
धुरवाक्श्रीमानेवामरोपमः ५१८ बलवीर्यधरोदक्षोनारायणोपमः दिनेनयोजनशतंगत्वाचपुनराव्रजेत् ५१९ जीवे

दूर्वाशतं चैव नात्र कार्या विचारणा प्रयोगान्यं प्रवक्ष्यामि शृणु षण्मुखानने ५२० कृष्णाधेनुक्षीरेणैव संलोड्य प्रक्षयेद्यदि प्रतीक्ष्यफलमा
प्नोति सत्यं सत्यं न संशयः ५२१ एवमाहिषदुग्धेन संलोड्य मधुना सह भुक्त्वा फलं पूर्ववच्च लभते नत्रयमासके ५२२ दध्ना भक्षणाद्देवि मा
सत्रयं प्रयत्नतः पूर्ववत्फलमाप्नोति न केशांमितताञ्ब्रजेत् ५२३ सर्वत्र जयमाप्नोति वशीकरणमुत्तमम् जीवेद्दूर्वाशतं देव नरो नागबलो
पमः ५२४ तथा शयनकाले च उदकेन घृतेन वा विडालपदमानं तु देहसिद्धिर्भवेद् ध्रुवम् ५२५ यथेच्छया पलशतं भुक्त्वा जरामरो भवे
त् कल्पेदं परमं गोप्यं तव स्नेहात्प्रकाशितम् यस्य सेवनमात्रेण नरो मोक्षमवाप्नुयात् ५२६ अथ श्वेतार्ककल्पः अथेदानीं प्रवक्ष्या
मि श्वेतार्ककल्पमुत्तमम् अस्य माहात्म्यविस्तारं शृणु षण्मुखानने ५२७ श्वेतार्कमूलमुद्धृत्य चूर्णं कृत्वा प्रयत्नतः आदौ सूर्यं नमस्कृ
त्वा विधिवत्पूजयेत्ततः ५२८ प्रातरुत्थाय जीर्णान्ते गवां क्षीरेण संपिबेत् भवेच्छ्रुतिधरो धीरो वलिपलितवर्जितः ५२९ कामदेवस्य
सदृशः सर्वशास्त्रविशारदः मासमात्रप्रयोगेण जीवेद्वर्षशतं नरः ५३० सर्वरोगविनिर्मुक्तो नरो नागबलोपमः श्वेतार्कमूलं कट्यां से
बध्वा देशान्तरं व्रजेत् ५३१ भूतप्रेतपिशाचाश्च डाकिन्यो गुह्यकास्तथा दृष्टिमात्रात्पलायन्ते श्वेतार्कस्य प्रसादतः ५३२ श्वेतार्कं गो
रोचनया गोघृतेन च पेषयेत् ललाटे तिलकं कृत्वा त्रैलोक्यं वशमानयेत् ५३३ श्वेतार्कस्य दलेनैव चन्दनं सह पेषयेत् एतद्राङ्कं कृ
त्वा किन्नरी भवति ध्रुवम् ५३४ श्वेतार्कमूलं कट्यां बध्वा रमणीं वै रमेद्बुधः धारयेत्तावत्तिलं शुक्रं स्त्रियं च वशमानयेत् ५३५ श्वेतार्कपु
ष्पपत्रं च कट्यां बध्वा रमेत्स्त्रियम् धारयेच्च नरः शुक्रं शतनारीं रमेद्यदि ५३६ श्वेतार्कमूलमानीय स्वरेत्तं सह पेषयेत् तिलकं कारये
द्यस्तु तस्य विश्वं वशं भवेत् ५३७ स्वरसं मधुसंयुक्तं श्वेतार्कतुलया सह यावत्प्रज्वलते दीपं तावच्छुक्रं च न क्षरेत् ५३८ नाभिपद्म
दले बध्वा तन्मूलं दक्षिणे करे धारयेच्च सदा देवी सौभाग्यं परमं भवेत् ५३९ श्वेतार्ककल्पमाहात्म्यं तव स्नेहात्प्रकाशितम् न वक्त
व्यं कामुकाय शठाय पनकदाचन ५४० अथ भृंगराजकल्पः अथेदानीं प्रवक्ष्यामि भृंगराजकल्पमुत्तमम् भृंगराजमूलपत्रं च
पिष्ट्वा तु यत्नतः ५४१ काञ्जिकैः पेषयेद्धीरो वटीं कुर्यात्प्रयत्नतः तां पिबेत्सह यत्नेन मासैकेन च गुणं भवेत् ५४२ भृंगराजपत्ररं

बृहज्ज्योर्ण
मिश्रस्कंध
१७

संकृष्णजीरसमंपिबेत् तैलेनसहसंदद्यात्वलीपलितवर्जितः ५४३ भृंगराजरसंचैवगुडूचीरससंयुतः मासमात्रप्रयोगेण सर्वव्याधिर्विनश्यति ५४४ अथकाछलाकल्पः काछलाकल्पम्प्रवक्ष्यामिशृणुष्वकमलानने काछलापादप्रहारेणनाभिव्य-थाविनश्यति ५४५ काछलामूलंकाेबध्वाअतिसारंविनश्यति अथअम्लालोनीकल्पः अथाम्लालोनीकल्पञ्चकथयामिवरानने ५४६ ह्यम्लालोनीरसंदत्वाचक्षुशूलंविनाशयेत् अतिसारंनाभिशूलंचक्षुशूलंतथैवच ५४७ अम्लालोनीसाचीमूलं मरिचंकुष्ठमेवच पेषयित्वापिबेद्यस्तुवसन्तस्तस्यनाशयेत् ५४८ अथशाल्मलीकल्पः शृणुदेवीप्रवक्ष्यामिशाल्मलीक-ल्पमुत्तमं श्वेतापीतातथारक्ताकृष्णाश्चेतिचतुर्विधाः ५४९ ब्राह्मणीश्वेतवर्णाचपीतवर्णाचबाहुजाः रक्ताचैवभवेद्वैश्याः कृष्णाश्शूद्राःप्रकीर्तिताः ५५० चतुर्वर्णमयीदेवीसर्वभूताप्रकाल्पिता श्वेतापीतातथाकृष्णानहिसर्वत्रलभ्यते ५५१ रक्तान्न कथयिष्यामियाचसर्वत्रलभ्यते तस्यापुष्परसंलब्ध्वा वह्नियोगेनसाधितम् ५५२ सुमुहूर्तेचकर्तव्यंज्ञात्वाचन्द्रबलाबलम् पलद्वयंपिबेत्प्राज्ञएकचित्तसमाहितः ५५३ रजनीप्रहरैकेनउन्मादोजायतेध्रुवम् अशीतिस्त्रियाःकामयतेस्वेच्छयापरिवृहितः ५५४ एकद्वित्रिचतुःपञ्चषट्सप्तमाष्टमंरमेत् प्रथमेद्विपलंदेवीचत्वारिचद्वितीयके ५५५ तृतीयेषट्पलान्येवपलान्यष्टौचतु-र्थके प्रतियामंपिबेत्क्षीरंरमेच्चयोषितंतथा ५५६ अनेनैवविधानेननरःसिद्धिमवाप्नुयात् चतुर्वर्षशतंदेविनरोजीवेन्नसंशयः ५५७ नरोनागबलोपेतःकामदेवसमोभवेत् नारीणांसतोनित्यंसुभगःप्रियदर्शनः ५५८ शीघ्रगामीभवेच्चैववलीपलित वर्जितः अथाभयाकल्पः अथातःसंप्रवक्ष्यामिअभयाकल्पमुत्तमं भक्षयेद्दतुभेदेनदेवतुल्योभवेन्नरः ५५९ शरत्क शीतायुक्ताहेमन्तेनागरेणच शिशिरेपिप्पलीयुक्तावसन्तेमधुनासह ५६० ग्रीष्मेचगुडसंयुक्तावर्षासुलवणेनच अनेनैववि धानेनभक्षयेद्योहरीतकीं ५६१ तस्यवृद्धिर्बलंवीर्यमारोग्यंस्थिरयौवनम् आग्नेदीपिकाध्यानिशरीरस्यहरीतकी ५६२ कदाचि कुप्यतेमातानोदरस्थाहरीतकी मातेवभक्षयेद्योहिहितकारीहरीतकी ५६३ अथारोग्यांबुकल्पः रुद्रयामले श्रीपार्वत्यु

काछलाकल्प
अध्याय
७०

वाच देवदेवविरूपाक्ष सर्वस्यपरमेश्वर प्रणम्यश्रोतुमिच्छामिशिवांबोश्चैवनिर्णयं ५६४ कृत्वादिव्यंमनुष्याणांपवित्रंस
र्वसिद्धिदं शिवांबुकीदृशंचैवकिंफलंतस्यसेवने ५६५ देवदानवमनुष्याः किन्नरायक्षराक्षसाः पन्नगाश्चपिशाचाश्च
विश्ववेतालभंजकाः ५६६ ज्ञातव्यंतस्यवृत्तांतंतस्यैकथयस्वमे गुह्याद्गुह्यतरंगुह्यंगुह्याद्गुह्यतरंपरं ५६७ अतिगुह्यतरंदे
विगोपनीयंप्रयत्नतः गौर्य्यांप्रणम्यपृच्छन्तिमुवाचशशिशेखरः ५६८ ईश्वरउवाच शृणुदेविप्रवक्ष्यामियत्वंमापरिपृच्छ
सि कथयामिनसंदेहोभुक्तिमुक्तिफलप्रदं ५६९ शिवांबुममृतंदेविह्युदरस्थंचदेहिनां पवित्रंपरमंपुण्यंदेहिसिद्धिकरंपरं ५
७० श्रीपार्वत्युवाच ग्रहणंवारणंग्रासंकेनमन्त्रेणकारयेत् तन्मेवददेवेशयदितुष्टोसिमेप्रभो ५७१ शिवांबुकीदृशंचैवकी
दृशंतस्यसाधनं कृपांकृत्वामहादेवकथयस्वममप्रभो ५७२ श्रीमहादेवउवाच साधनंशृणुदेवेशिसर्वपापक्षयंकरं सर्वसि
द्धिप्रदातारंसर्वज्ञानकरंपरं ५७३ सर्वौषधमयंदिव्यंसर्वबुद्धिप्रदायकं सर्वशास्त्रविचारज्ञंमर्वमेधाकरंनृणां ५७४ पश्चाद्रज
नीयामेचघटिकानांचतुष्टयं उत्थायसाधकश्रेष्ठो मूत्रोत्सर्गंतुकारयेत् आदिधारांपरित्यज्यमध्यधारांचगृह्यते ५७५ अंति
धारांपरित्यज्य एवंविधिंसमाचरेत् पात्रविधिंप्रवक्ष्यामिशृणुदेविमनोरमे ५७६ मृत्तिकाकाष्ठपात्रेषुचर्मपात्रेतथैवच विराट
पल्लवपात्रेशंखपात्रेचश्रीफले ५७७ गजदंतमयेपात्रेदिव्यासित्रेवमौक्तिके ५७८ घृताचार्श्ममयेपात्रे वटपात्रेचलाचके वं
शपात्रेचकर्त्तव्यंशृंगपात्रेतथैवच ५७९ श्वेतकाचमयेपात्रे कर्पात्रेतथैवच वर्जयेत्ताम्रधातूनांलोहपात्रेणसाधयेत् ५८०
तेनमार्जितपात्रेश्चअघोपात्रेणधारयेत् तत्पात्रशोधनंदेवीवक्ष्यामितववसुंदरि ५८१ प्रणवादितथामायाकुरुद्वयंकुलेश्वरी
ॐह्रींहुंफट्समुच्चार्यस्वाहांतेनशोधयेत् ५८२ अनेनमन्त्रराजेनशोधयेच्चशिवांबुना ॐअस्त्रायफट् अनेनमन्त्रेणशोध
येत् ५८३ अन्यमन्त्रंप्रवक्ष्यामिशिवांबुर्येनशुध्यति सत्यंसत्यंपुनःसत्यंसत्यंवकथितंमया ५८४ अथग्रहणमन्त्रः ॐजूं
सः ह्रींअमृतवर्षिणिअमृतंकुरु२ स्त्रीवैज्ञायते ओंहुंफट्स्वाहा अनेनसप्तवारंशोधयेत् अनेनैवतुमन्त्रेणलीयतेसततंबा

रः अघोरास्त्रायफट्स्वाहा अनेनसमवारंशोधयेत् अनेनमन्त्रराजेणदेहन्यासंसमारभेत् अंगन्यासंततःकुर्यात्करन्या
संचकारयेत् ५८५ ॐह्रीं अंगुष्ठाभ्यांनमः ॐश्रींतर्जनीभ्यांनमः ॐक्लींमध्यमाभ्यां ॐह्रींअनामिकाभ्यां० ॐश्रींक
निष्ठिकाभ्यां० ॐक्लींकरतलकरपृष्ठाभ्यांनमः एवंहृदयादि अनेनमंत्रराजेनदेहमध्येस्तुवंत्यतः पश्यंतिस्नानपानेन्क्लेप
नेमुखक्षालने ५८६ शिवांबुशोधयेन्नित्यंत्रिकालंप्रणितोबुधैः प्रभातेचलुकंत्रीणिविधिपूर्वंप्रयत्नतः ५८७ आहारंच
निराहारंनित्यंचसदसेवयेत् षण्मासात्स्तंभनंदेहोबलीपलितनाशनं ५८८ संवत्सरशताभ्यासमणिमादिगुणाष्टकं सेव
येद्वत्सरंयुग्मंजीवेच्चशरदांशतं ५८९ त्रिवर्षेणैवदेवोशिवाचासिद्धिःप्रजायते संवत्सरचतुष्केणदिव्यकायोभवेद्ध्रुवं ५९०
पंचवर्षाणियःसेव्योनतस्यदुरितंक्वचित् स्कंदवक्रेणवर्षेणशक्रायुधसमवपुः ५९१ सप्तमेचाष्टमेवापिशापानुग्रहणेसमः
नवमेदशमेदेविबालिष्ठोगजराजवत् ५९२ द्वादशैकादशेचैवअदृश्योभवतिध्रुवं पूर्ववत्साधयेन्नित्यंछायातस्मनदृश्यते
५९३ भेषजान्विधिवक्ष्यामिशृणुचैकाग्रमानसा गन्धकंत्रिफलायुक्तंभृंगराजंसपारदं ५९४ लोहचूर्णंतथावंगंहरिद्राचशि
वांबुना कर्त्तव्यंचसदादेवि तस्यरोगभयंकुतः ५९५ रक्तबीजसमायुक्तंशिवांबुसहितंपिबेत् गंधकंपारदंव्योषंत्रिफलासिद्धमूलि
का ५९६ नाशयेत्सर्वरोगाणिराजयक्ष्मादिसर्वशः मासमेकप्रयोगेणहारकःसदृशंवपुः ५९७ गृध्रदृष्टिःप्रवर्त्तंतेश्रुतिर्वराहसंभवः
त्रिवर्षेचकृतंयेनजीवेद्वर्षसहस्रकं ५९८ रसेन्द्रदेवदालीचअरिष्टकेन्द्रवारुणी शिवांबुसहकर्त्तव्यंभूतप्रेतविनाशनं ५९९ नश्यंतिडाकि
नीसर्वाशाकिनीचपुरास्तथा पिशाचापिविनश्यन्तितेषांपानेनतत्क्षणात् ६०० प्रयोगंचप्रवक्ष्यामिकुष्टाष्टादशवारणां हरितालंच
चाब्राह्मीशिवाहिंगुकटुत्रिका ६०१ सोमराजीहरिद्रेद्वेसौराष्ट्रीकुष्टचन्दनं सज्जीक्षारंयवक्षारंगन्धकंपारदंतथा ६०२ सिद्धार्थंचविडं
गानिप्रपुनाटंचवैशिवा सैंधवेनसमायुक्तांशिवांबुसहलेपयेत् ६०३ मासार्द्धेनापियोगेनहंतिस्वेतंविचर्चिकां कण्डुमण्डलरक्तं
श्यानिब्रह्मदद्रुविचर्चिका ६०४ एतानिहरतेशीघ्रंकार्पासेपावकोयथा महानिंबुवचाहिंगुनासापानंशिवांबुना ६०५ नाशयंति

कुपुत्रेणरणीवाथकुलंयथा गंधकंचाशिवाद्यार्विमधुसर्पिसमन्वितः ६०६ सद्योपिचामीरिपीत्वाहंतिशोफगलग्रहं कफपांडु
प्रमेहानिक्षयक्षयकारन्नृणां ६०७ गुल्मप्लीहोदरंचास्मिहृद्यदिहरतिवेगवान् अपामार्गजराच्चूर्णलोहच्चूर्णांशिवांबुना ६०८नं-
श्यन्तिव्याधयःसर्वेपावकस्याशिवांबुना कारवीजिरापिप्पज्येष्ठवागिरिकर्णिका ६०९ शिवांबुसहितंपीत्वामर्दनंकारयेदपि
गजचर्मकिलासस्यांविचर्चिव्रणसिद्धिच ६१० पक्षेमासेऽथवाहन्तिश्वेतकुष्ठंनसंशयः अमृतासोमराजीच्चसोमवल्लीशिवां
बुना ६११ लोहचूर्णविकारघ्नंवयस्तंभकरंपरं क्षारंशाशांकसंयुक्तंशिवाचूर्णांशिवांबुना ६१२ लेपंदत्वाप्रयत्नेनश्वेतकुष्ठं
हरेद्ध्रुवं गंधकंतालकंविश्वाहेमाभ्रमरिसूतकं ६१३ वज्रकायोसमराज्ञेरजबीजांशिवांबुना गुटिकार्याप्रयत्नेनधारयेद्वक्त्र
मध्यतः ६१४ देवासुरानपश्यन्तिअदृश्याभवतिध्रुवं तद्भसंभक्षयेद्यस्तुसमराज्ञोविचक्षणः ६१५ वज्रकायोभवेत्सोपिव
लिपलीतवर्जितः संवत्सरप्रयोगेनास्थिरंजीवंजितेन्द्रियः ६१६ वक्रेचनिर्मलावाग्वांशापानुग्रहकारके: त्रिफलाभृंगराजस्य
योषंचमधुज्येष्ठिका ६१७ अपामार्गजयाच्चूर्णभक्षयेच्छिवांबुना उदरव्याधिनाशायशोफशूलाग्निमांद्यच ६१८ सर्वरोगाविः
नश्यंतिक्षात्रेयाच्मार्गवोयथा नीलीमूलकृताक्वाथंकृत्वासहाशिवांबुना ६१९ नाशयेद्रोगराजेन्द्रंबिडालोमूषकंयथा क्षीरवं
दकेशरंचैवघनसारसूरोचनं ६२० मर्दयित्वाप्रयत्नेनशिवांबुसाहितंध्रुवं तिलकंकारयेत्तेनमन्त्रेणानेनपार्वति ६२१ अथमन्त्रंप्रव
क्ष्यामितिलकंकारयेद्वशे मायांमाचतथाकामविश्वेश्वरीमतःपरं ६२२ वश्यंचशब्दमुच्चार्यकुरुद्वंद्वंततोद्धरेत् पुनर्मायांमहाल
क्ष्मींकामराजंतथापुनः ६२३ सर्वतीदंद्धतेवश्यंस्वाहान्तोतिलकंकृतं मन्त्रोद्धारमिमंदेविन्नैलोक्यंवशमानयेत् ६२४ यंयंपश्यति
तंदेवितंतंभवतिवश्यगं देवासुराभवेद्वश्यावश्याश्चभुजगानराः ६२५ एतद्वश्यंवरारोहेसत्यंसत्यंनसंशयः अथमन्त्रंप्रवक्ष्यामि
शृणुदेविममप्रिये ६२६ रोचनंकेसरंसिद्धकर्पूरंचाशिवांबुना भूर्जेपात्रेसमालिख्यशिवनेन्नगृह्यथा ६२७ मध्यबिंदुसमुद्धृत्यात्रि
बीजंचत्रिकोणकं नूनंषडंगंतद्बाह्येतन्मध्येचषडक्षरं ६२८ तद्बाह्येचाष्टपत्रंचतन्मध्येभैरवाष्टकं रेखात्रयसंयुक्तंचतुरस्रंततम

रि ६२९ तन्मध्येचतुरोवेदान्मंत्रबीजंन्यसेत्क्रमात् यन्त्रोद्धारमिमंदेविदुर्लभंचसुरैरपि ६३० चतुर्विंशाक्षरंदेविमंत्रंयन्त्रेनविन्यसेत्
अथमन्त्रंप्रवक्ष्यामिशृणुदक्षसुतेप्रिये ६३१ मायाद्यकमलाकामंविपरीतषडक्षरं यद्वासिमनरूकारअरुक्रोंक्रसीसंयुतः ६३२ अंइं
उंएंचतुर्द्वारेत्रिबीजंत्रिवलंन्यसेत् एतद्देविमहायन्त्रंभुक्तिमुक्तिफलप्रदं ६३३ भयनाशकरन्नूनंवशीकुर्याज्जगत्त्रयं अथमन्त्रः
ॐ ह्रींश्रींक्लींउंनमः शिवायअरुश्यक्रोंकश्रीसं अंइंउंएंक्लींश्रींह्रींएंवंमंत्रमयंयन्त्रंसर्वसिद्धिकरंनृणां ६३४ सर्वकामार्थदंदेवि
साधकानांसुखप्रदं अन्यापियुक्तिनायरुयश्रीखंडचशिवांबुना ६३५ नासिकापानमात्रेणनश्यन्तिदुष्टकुष्ठकं शस्त्रघातेनदुष्टेन
विषंस्थावरजंगमं ६३६ ज्येष्ठीमधुअरिष्टांविडंगंचैवरामठं आमलक्याशिवांबुंचसैंधवेनसमन्वितं ६३७ नेत्ररोगाविनश्यंतिज्ञा
रंभपटलादयः ऋतुभेदंप्रवक्ष्यामिशृणुदेविमनोरमे ६३८ हरीतकीवचाविश्वाधात्रीचैवशिवांबुना ऋतुराजंसदापीत्वासर्वरोग
निवारणं ६३९ ग्रीष्मेआमलकीचूर्णंशिवागुडशिवांबुना नाशयेतिमहापित्तंकुष्ठगुल्मौस्मरान्हरेत् ६४० नश्यन्तिसततंरोगंदारु
णंसान्निपातकं वर्षाकालेमहादेवित्रिफलाचसमान्विता ६४१ शिवांबुसहितंपीत्वारोगनाशफलप्रदं शरत्कालेमहादेवि भृंगराजस
मान्वितं ६४२ शर्करासहितमंबुसेवयेद्व्याधिनाशनं हेमंतेचमहादेवित्रिकटुत्रिफलासह ६४३ शिवांबुसहितंपीत्वाक्षयपक्षयकरं
परं शिशिरेचसदापेयंसैंधवंपिप्पलीवचा ६४४ मरीचामिश्रितंकृत्वाशिवांबुसहकारयेत् सर्वेरोगाविनश्यंतिआयुर्बुद्धिविवर्धनं ६४
५ वातश्लेष्मविनाशायसात्वंतेविनिवर्त्तते ६४६ इतिऋतुभेदं पार्वत्युवाच प्रसादंकुरुमेदेवप्रसन्नोभवमेप्रभो केनरोगाविनश्यं
तिशीशिरेषुभविष्यति ६४७ शिवांबुपीत्वायेनरस्सर्वव्याधिविनाशनं यथायथाभवेद्व्याधिऔषधंकथयस्वमे ६४७ प्रसादंकुरुमे
देवग्रहणीरोगवारणं रोगराजंचपाण्डुश्चप्लीहगुल्मजलोदरं ६४८ अनेकव्याधयःसर्वेविभिन्नंकथयस्वमे प्रसादंकुरुमेदेवयद्यहंतव
वल्लभा ६४९ श्रीमहादेवउवाच शृणुदेविवचनंदेविमैथुकाचतलकान्विता तेपित्तंचगतावाततस्यवातसमुद्भवां ६५० निर्गुण्डीमूलमादा
यतेजांबुसहितंपिबेत् सर्वव्याधिनिवर्त्ततेपिबेन्मधुनासह ६५१ पित्तव्यासंभवेद्देविउत्कुष्ठंयदिदेहिना चूर्णमानाडिकापुक्तदाकरान्

समन्वितं ६५२ महापित्तंहरत्याशुशीतलोभवतिक्षणात् हरिषाहन्तिवेगेनसर्वोदरविकारयत् ६५३ शर्करामुराभिर्दुग्धंपथ्यंचयथेच्छभो-
जनं सर्वपित्तंनिवर्त्ततेभेषजंक्रियतेसदा ६५४ सर्वश्लेष्मानिवर्त्ततेवर्धमानेपिपिप्पली कफरोगानिवर्त्ततेवज्रकायोभवेन्नरः ६५५ कुक्षिवा
तंभवेच्छूलंपंक्तिशूलान्यशूलकं हृदयेवातशूलंचदेहमध्येव्यवस्थितं ६५६ बीजकाष्ठंचकर्त्तव्यंराजांबुसहितंपिबेत् सर्वशूलंविन
श्यन्तिसत्यंसत्यंनसंशयः ६५७ हिंगुनागरिकाविश्वकाचलवनस्युतं तेजांबुमिश्रितंकृत्वापिबेन्नरविचक्षणः ६५८ वातपित्तंत-
थाशूलंकफशूलंविनश्यति अमृतांबुसमंपित्वाशूलंनश्यतिदारुणं ६५९ शतावरीशिवांबुंचसेवयेच्चानिरंतरं सर्वशूलंविनश्यंति
शिखिनापन्नगोयथा ६६० खर्जूरकेवलंयस्तुसेवयेच्चशिवांबुना कासश्वासंहरत्याशुयथातृणंचपावकः ६६१ सूरणंशृंगवेरंचछायाशु
ष्कंशिवांबुना हरिषाहन्तिवेगेनयथाजाड्यंसरस्वती ६६२ न्याशाल्मीसूरणंकन्दचूर्णंछायाविशुष्कयेत् शिवांबुनासमायुक्तंग्रहणी-
व्याधिनाशनं ६६३ सूरणंकेवलंयस्तुसेवयेच्चशिवांबुना हरिषासंहरत्याशुजंतुजालंपतन्तिहि ६६४ अरलुचित्रकंशुण्ठीयवक्षारं
कलिंगकं सैन्धवंचमृताहिंगुशिवांबुसहितंपिबेत् ६६५ सर्वातिसारविध्वंसोग्रहणीव्याधिवारणं हरिषापततेशीघ्रंसेवयेद्विधिपूर्वकं
६६६ त्रिफलासहपानंचनेत्ररोगानिवारणं भृंगराजसमायुक्तंदिव्यदृष्टिकरंपरं ६६७ त्रिफलाकेवलांयस्तुसेवयेच्चशिवांबुना
हन्त्यष्टादशमेहानिपंचपाण्डुविनश्यति ६६८ त्रिफलालोहचूर्णंचमण्डूरंचशिवांबुना पञ्चपाण्डुविनाशायपन्नगंनकुलोयथा
६६९ पिप्पलीपिप्पलीमूलंशुण्ठीशृंगीचनागणं लेहोयंमधुनाकृत्वाशिवांबुचपुनःपिबेत् ६७० लेहोवामधुनायुक्तशिवांबुन
समन्वितः प्रमेहाष्टदशोहन्तिराक्षसान्राघवोयथा ६७१ अष्टादशप्रमेहानिशृणुत्वंदेविभेषजं शिवांबुसेवयेन्नित्यंविरेकेणस
मन्वितं ६७२ पुनर्नवाशिवांबुंचवारीरंचपुनर्नवं शिवाचूर्णंशिवांबुंचकुष्ठीनांसेवयेत्सदा ६७३ सततंनित्यचित्तंचसर्वकुष्ठविना
शनं निर्मलंमध्यखण्डंचसदासेवन्तिपण्डिताः ६७४ त्रिफलाभृंगराजंचशर्कराचसमान्वितं कृष्णातिलसमायुक्तंचन्द्ररश्मिसमन्वि
तं ६७५ रात्रावताडितावायुअमृतस्यसमान्वितं सर्वदासेवयेद्देविजीवेद्वर्षसहस्रकं ६७६ चुलुकाष्टकंपिबेन्नित्यंवलिपलित

नाशनं पंचैवचुलुकंपीत्वासन्नरोबुद्धिसागरः ६७७ वातोद्भवाथवाकुष्टपित्तश्लेष्मादिसंभवाः सर्वकुष्टानिवर्त्ततेवान्हेचूर्णीशिवां
बुयुक् ६७८ तृतीयंनिंबचूर्णन्तुपंचांगांशिवयासह शिवांबुसहितंपीत्वागात्रकल्पोभवेदपि ६७९ शिवांबुनिंबपंचांगंसेवयेच्च स
दाबुधः नीलनंचतनुंतस्यभुजंगःकंचुकीयथा ६८० त्रिकटुत्रिफलायुक्तंभृंगराजंपुनर्नवा शिवांबुसहितंपीत्वाश्वेतकुष्टप्रणश्य
ति ६८१ उदुंबरत्वचायुक्तंगिरिकर्णीजटासह शिवांबुसहितंलेपात्हंतिकुष्टसुदारुणं ६८२ मर्दयेद्दाद्रुदेहेनसर्वकुष्टविनाशकं
दिव्यदृष्टिर्भवेत्तस्यदिव्यकायाभवंतिते ६८३ सततंप्रातरुत्थायक्षालयेल्लोचनंसदा दिव्यदृष्टिर्भवेत्तेषांचक्षुरोगैर्नबाध्यते
६८४ पयसासहसंजातंमथनेघृतंयुतं यजतेवचनंप्रोक्तंअग्निवर्णसमन्वितः ६८५ तथैवनवनीतंतुभक्षयेच्चविचक्ष
णः दद्रुविचर्चिकुष्टानिमण्डलानिविधानिच ६८६ पामाउदरप्लीहंच कृमिगुल्मोदरंतथा सर्वव्याधिविनिर्मुक्तोपावकेनशि
वांबुना ६८७ पालकीचनिशातैलंशिवांबुसहितंपिबेत् रक्ताशुदारुणजातंपानेननश्यतिवेगवान् ६८८ पिप्पलीमृतताम्रंच
मृतसूतंचअभ्रकं मण्डुरंचतथालोहंनिर्मूलंचाशिवांबुना ६८९ चित्रकेनसमायुक्तंसिद्धमूलीसमन्वितं तेजांबुसहितंनश्ये
द्भीमराजीविनाशयेत् ६९० पित्तप्लीहोदरहन्याच्कणाओषधसैन्धवं अम्लवातसमायुक्तंशिवांबुसहितंपिबेत् ६९१ शि
वांबुचित्रकंयुक्तंजयपालंचपिप्पली भक्षयेत्समरात्रंतुउरव्याधिनिवारणं ६९२ त्रिफलासर्वरोगघ्नआयुर्बुद्धिविवर्धनं राजांबु
पिबतेनित्यंजरामृत्युविनाशनं ६९३ मेधाचबहवस्तरचबुद्धिविद्याविवर्धनं स्नानदानंक्रियाघोरंजपजाप्यंविशेषतः ६९४ ब्रा
ह्मणान्पूजयेद्देविसर्वदानसमन्वितं गोदानंचान्नदानादितोयदानसवासनं ६९५ दक्षिणाहाटकंदद्यात्कुलमार्गेण आचरेत् गु
रोराज्ञांगृहीत्वातुदरवेच्चशुभेदिने ६९६ सर्वासिद्धिर्भवेत्तस्यगुरुवाक्यरतोनरः गुरुवाक्यंविनादेविसामर्थ्यंनैवजायते ६९७ यो
गुरुरहितंपानंशिवांबुक्रियतेनरः मूत्रपानकृतंतेनमनरःपापसंभवः ६९८ नरकेनियतंवासोश्वानयोनिंचप्राप्यते सततंपि
बतेमूत्रअमन्त्रविधिनासदा ६९९ दिव्यवर्षशतंभूमौविष्टायांजायतेकृमिः गुरुवाक्येनमार्गेणयोनरःकर्त्तुमिच्छति ७०० तेषांवैस

कलांसिद्धिं प्राप्यते मनसाफलं सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलं ७०१ सर्वे सुराः प्रपूज्यंते सर्वसिद्धिं लभेन्नरः सर्वयज्ञेषु यत्पु
ण्यं तत्पुण्यं चशिवांबुना ७०२ अथन्यासं प्रवक्ष्यामि येषु कामेषु सिद्धये साधकः पौष्टिकं चैव वश्याकर्षणकर्मणि ७०३ वाम
नाड्या प्रवाहेन कर्त्तव्यं वीरवन्दिते मारणोच्चाटनं चैव विद्वेषः स्तंभनं तथा ७०४ कर्त्तव्यानित्य शोहं विभवाह दक्षिणेन तु यानिया
नि च कर्माणि शुभानि चाशुभानि च ७०५ अवश्यं चाप्यवश्यं च विषस्थानेव कारयेत् जितेन्द्रियो सत्यवादी सर्वकार्याणि साध
येत् ७०६ शिवांबु मासमेकं तु यः पिबेच्च वरानने प्रतिदिनं तथा कृत्वा पुरा दुःखसमान्वितः ७०७ दीपदानं तथा पूजा शिवभ
क्तिं च कारयेत् इयं विद्या परा गुह्या न देया यस्य कस्यचित् ७०८ जितेन्द्रियाय सत्याय दातव्यं भक्तिवत्सले क्रियाहीनेन दातव्यं
नदेयं पापकर्मणि ७०९ त्वयादेवि मया प्रोक्तं यदित्वं मम वल्लभा ब्राह्मणं परमं गुह्यं गतीनां परमा गतिः ७१० पुण्यानां परमं पु
ण्यं ज्ञानिनां ज्ञानवर्धनं ७११ इति रुद्रयामलोक्त शिवांबुकल्पः अथ ताम्रवने मण्डूकाकृति पाषाणकल्पः तत्रैव ता
म्रवने सीता देवी पर्वते तिष्ठति तत्र समीपे तुण्डाकृतयः पाषाणाः खन्यमानाः प्राप्यंते ७१२ तत्र बल्युपचारकरणं भवति सप्त
ग्रामाणामेकैकस्य ग्रामस्य सप्तगृहे भ्यो भिक्षाकोरान्नरूप [illegible] नतेन मन्त्रेण गृहीतव्या ७१३ सचमन्त्रः ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौंः
क्षेत्रपालाय नमः स्वाहा ७१४ अनेनैव प्रयोगेण रंधयित्वा तेनान्नेन दशासु दिक्षु बलिं दद्यात् अनेन मन्त्रेण कुद्दालिकामभि
मन्त्रयित्वा खन्यंते ७१५ अनेनैव मन्त्रेण यावन्मुण्डाकृतयः पाषाणा निर्गच्छन्ति ७१६ ततस्तोयमर्धार्धं कुटद्वयं कुर्यात् अ
र्धं क्षेत्रपालाय अर्धं साधकाय तदुभयमर्धं गृहीत्वा हमादिशा वक्तव्यं ७१७ एवं गृहीत्वा यद्भविष्यति द्रव्यं तेन द्रव्येण कुमारि
काणां योगिनीनां सिद्धानां च तुष्टिं देवप्रासाद वापिकूपतडागादिश्रेयः करिष्यामि त्वत्प्रसादात्सुरेश्वर ७१८ यदि देशकालो
योगौ स्यातां यद्वायोग्यौ तौ स्यातां तर्हि तत्पाषाणान्त्वत्क्षेत्रे क्षेत्रपाल प्रस्थापयिष्यामि संप्रति पाषाणसाधनं करिष्यते ७१९ क्षे
त्रपालमनुस्मृत्य तान्पाषाणानारण्योपलैर्गज पुटेपाचयेत् ७२० परिपक्वांश्चेदुष्णेन शिवांबुनासिंचेत् गोमूत्रेण त्रिवारमाभि

षिंच्य घृतनवनीताभ्यांसिंचेत् ७२१ पश्चात्तद्ब्राह्मेपाषाणमश्मटंकोरयित्वा स्फोटयेत् स्फुटितस्याभ्यंतरंपाषाणंगृहीत्वा
चूर्णकृत्वाभ्यर्च्यावर्त्तितवंगस्यशतांशेनचूर्णंदद्यात्ततारंभवतिशोभनं ७२२ सोलोहकसमायुक्तोगन्धकेनमर्दापयेत् तैलं
चतुर्गुणंप्रोक्तपश्चाच्चाष्टगुणंभवेत् ७२३ घृतंतुत्रिगुणंप्रोक्तंमधुश्चद्विगुणंभवेत् भक्षयेत्पलमेकंतुसर्वरोगान्विनाशयेत् ७
२४ इतिताम्रवनेसीतादेवीडोंगरिकायाम् मुण्डाकृतिपाषाणकल्पः अथोच्चटाकल्पः रसायनंप्रवक्ष्यामियत्सुरैरपिदुर्लभं
उच्चाटाओषधीनाम्नाजायतेपृथिवीतले ७२५ चतुर्लक्षणसंयुक्तातस्यारूपंतुकथ्यते एकनालाभवेत्सातुवर्णेनकंसनालि-
का ७२६ तस्यापुष्पंभवेद्रक्तंशुकतुण्डसमप्रभं फलंकूर्मप्रतीकाशंतस्यालक्षणमीदृशं ७२७ तस्योपरिसमारुह्यस्थितारि
क्षंनिरीक्षयेत् दिवापश्येच्चनक्षत्राणिचिन्हंदृष्टातुईदृशं ७२८ रसंहिस्रवतेसातुमधुरंतुविचक्षितं सरसःपर्वतोहानिसकृल्लि
प्तेतुविंदति ७२९ काचनंकुरुतेदिव्यंक्षिप्रंचैवतुवन्हिना अंगुल्यैकांवालयित्वालेहयेत्तांसकृत्पुमान् ७३० त्वचःसर्वाविं
शीर्यन्तेनखरोमाणिसर्वतः जायतेसर्वगात्रेणद्विरदवरणाकृतिः ७३१ निधानानिचसर्वाणियत्रतत्रास्थितानिच पश्यतेनात्र
संदेहोऔषध्याश्चप्रभावतः ७३२ प्रद्युम्नसदृशोरूपेनागायुतपराक्रमः कान्त्याचन्द्रसमःप्राज्ञोवेगेनपवनोपमः ७३३
मेधावीसर्वशास्त्रज्ञोवलीपलितवर्जितः मार्कण्डेयवद्दीर्घायुःसत्यसौभाग्यवान्भवेत् ७३४ अथवापत्रपुष्पाणिफलमूलंत
थैवच सूक्ष्मचूर्णंप्रकुर्वीतप्रतिवापंचदापयेत् ७३५ एकविंशतिवाराणिगोमूत्रेपुनिषेचयेत् छेदेदाहेकषेचैवहेमभवतिशो
भनं ७३६ शुल्वतारंप्रलेपेनवेधयेन्नात्रसंशयः काचनंचभवेद्दिव्यंत्रिभिर्दोषैर्विवर्जितं ७३७ अथतस्यौषधस्थानंकथ
यामिसमासतः कुबेरनगरेरम्येमनोज्ञेतीर्थसंगमे ७३८ हिमालयेऽर्बुदारण्येतथाजालंधरेगिरौ सह्येविंध्येमहानागेस्था
नेनारायणीयके ७३९ चन्द्रकान्तगिरौनाम्नाहेमपृष्ठेचसुव्रते एतेषुस्थानेषुविख्याताओषधीसुरपूजिता ७४० विजयानामविख्या
तात्रिषुलोकेषुपावनि आयुष्यंसाधकेन्द्रस्यददातिसिद्धिपूजिता ७४१ कान्तजीर्णरसंकृत्वाहेमजीर्णमथापिवा उच्चारायारसंद

खारसंकर्षंतुमर्द्दयेत् ७४२ पिबेन्मधुघृतयुतांनिद्राभवतितत्क्षणात् कूर्मस्यस्कंधवत्कर्मशरीरेसाधकस्यच ७४३ उपमास्यात्प
तेसर्वपूतातिद्युत्यतत्यसौ यामेनैकेनदेवेशिस्फुरततत्रसंशयः ७४४ तस्मान्निर्गच्छतेसिद्धः सूर्यतेजसमप्रभः त्रासयंश्चजगत्स
र्वंसयक्षोरगराक्षसं ७४५ अमरानपिनिर्जित्यबलेनकुलिशाधिपः हत्वाविद्याधरान्सिद्धान्येचान्येयुद्धकांक्षिणः ७४६ स्वयमेव
भवेदिन्द्रोकल्पस्यास्यप्रभावतः अथवापारैकसूतंचतुर्थांशंददेत्त्वगं ७४७ उच्चारायरसंदत्वामर्द्दयेत्पाणिमध्यतः क्षिपेत्तराव
तापेन्वरसोदिव्योषधीबलात् ७४८ विंदतेसर्वलोहानिलक्षांशेनवरानने अथवातांक्षिपेद्वक्त्रेअदृश्योजायतेक्षणात् ७४९
व्रजतेकिंनरेलोकेतत्रासौचभवेन्नृपः ७५० इतिउच्चटाकल्पः अतोमुण्डकाकृतिपाषाणकल्पंव्याख्यास्यामः अस्ति
दक्षिणदिक्पथेपद्मपुरंनामनगरंतत्रपर्वतिकामण्डूकीनामतस्याधोनिखनेच्चमण्डूकाकारपाषाणादृश्यमाणाग्रह्यंते सूक्ष्म
चूर्णंततःकृत्वासमगोधूमचूर्णकं गोक्षीरेणतुसंमिश्रंघृतेनमधुनासह ७५१ घृतपूरंपचेद्देविभक्षयेच्चा दिने मासैकस्य
प्रयोगेणवलिपलितवर्जितः ७५२ जीवेद्वर्षसहस्रंतुनात्रकार्याविचारणा मण्डूकाकृतिपाषाणामण्डूकरसभाविताः ७५३
घृतमधुगोपिताचहिंगुरसेनभाविताः प्रतिवापंतुशुल्वंतुकनकंकुर्वतेभृशं ७५४ ॐ क्लांमण्डूकेश्वरायस्वाहा ॐ ह्रींअमृतं
कुरुस्वाहा ७५५ इतिमण्डूकमुण्डाकृतिपाषाणकल्पः अथप्रकारान्तरेणकृष्णोदककल्पः अस्तिचण्डदेशेअर्जु
नग्रामस्योत्तरेचन्द्राद्रिपूर्वदिग्भागेशरक्षेपमात्रतः ७५६ महद्वृक्षत्रयंतिष्ठत्तन्नान्तरेधन्वन्तरे तत्रातिष्ठच्छिलास्थूलातस्याधो
बिलमुत्तमं ७५७ तद्बिलाभ्यन्तरेदेवीकृष्णोदकंचतिष्ठति तिलतैलाक्षिपेत्तत्रयथावाप्योनिगच्छति नीलांजनप्रभाभासकृ
ष्णाख्यांतुगृह्यते ७५८ वज्रपत्रेणधान्निवागृह्यतेतत्प्रयत्नतः तन्मध्येक्षीरखण्डश्वेतचंदनंनिक्षिप्तंकृष्णावद्भवेत् ७५९
अतियत्नेनगृह्णीयात्तोयंहस्तेनसंस्पृशेत् गोघृतधातृचूर्णेनबिडालपदमात्रकं ७६० भक्षयेत्समरान्नंतुवलीपलितवर्जितः
तज्जलेमर्दयेत्सूतंगुटिकावर्तितंभवेत् ७६१ मुखप्रक्षेपमात्रेणखेचरत्वंप्रयच्छति ७६२ इतिकृष्णोदककल्पः

अथखरसाडकल्पः खरसारंपलाशपूटकेनग्राह्यं पलाशपादुकेआरुह्य शुभेराश्यादिनक्षत्रे क्षेत्रपालस्य बलिंदत्वाग्रा
ह्यंतन्मध्येकटुतैलंप्रक्षिप्यखदिरदण्डेनचालयेत् ७६३ तन्मध्येरसंप्रक्षिप्यमर्दयेत्ततः कट्टयातिपुनस्तन्दुलोदकप्रक्षि
प्यत्रिदिनैः सिद्धंभवति ७६४ ततोगृह्यात्रिलोहवेष्टितांगुटिकांकृत्वागुर्वादीन्प्रणम्य मुखेप्रक्षिप्याद्दश्योभवति ७६५ तेन
कल्कवंगंस्तंभयति शुल्वस्यपलशतकल्कलेपेनवेधयेद्धेमंभवति ७६६ तस्यहेम्नागुटिकांकृत्वामुखेप्रक्षिप्याद्दश्योभ
वतिहस्तेनापिनदृश्यते ७६७ तद्रसंतन्दुलोदकेनसहभक्षयेत्त्रिदिनमजरामरोभवति ७६८ भूयोघृतमधुनासहभक्ष
येत् वज्रकायोभवति ७६९ खदिरांगारेध्मातंचेत्संत्वंपततिशोभनं तत्सत्वंमुखेप्रक्षिप्यवयस्तम्भनयातिवज्रकायोभव
तियक्षराक्षसनागानामवध्योभवति ७७० तेनरसंमर्दयित्वातंरसंहेमवेष्टितंकृत्वामुखेप्रक्षिप्यतत्क्षणाद्दन्तार्हितोभव
ति ७७१ यस्मात्संध्यायतिजीवेच्चन्द्रार्कतारकं मन्त्रःकथ्यते ॐ नमोभगवतेरुद्रायसर्वक्षेत्राधिपतयेस्वाहा ७७२ अने
नमन्त्रेणगन्धपुष्पबलिंदत्वाग्राह्यमेतत् एवंगृहीतेसिद्धिर्भवति ७७३ इतिखरसाडकल्पः अथकुष्टोदककल्पं
व्याख्यास्यामः कुष्टोदकयत्रतत्रद्दष्टकर्मंतुकारयेत् तत्प्रदेशनरोगत्वानियतोनियताशनः ७७४ ब्रह्मचारीजितक्रो
धः सर्वभूतदयापरः शरीरेकारयेद्रक्षामन्त्रेणानेनमन्त्रवित् ७७५ ॐ ब्रह्मणेनमः ॐ रुद्रायनमः ॐ विष्णवेनमः ॐ
कृतकृत्यैनमः एषरक्षामन्त्रः अनेनकारयेद्रक्षामुदकस्याविचक्षणः ७७६ ॐ नमः सप्तधात्विश्वरीदेवीसिद्धेश्वरीस्वा
हा मन्त्रेणानेनउदकंसंगृह्यतुविचक्षणः एषसिद्धेश्वरीमन्त्रः सर्वकार्येषुसिद्धिदः ७७७ रसस्यचपलैकन्तुगन्धकस्यपलं
तथा गगनंद्विगुणंचैवसर्वखल्वेनियोजयेत् ७७८ जलोक्षिपेत्प्रमाणंतुरसोवध्यतितत्क्षणात् अनेनैवप्रकारेणक्षणादग्निः
सहोभवेत् ७७९ मर्दनाज्जायतेक्षिप्रंलक्षवेधीमहारसः सजीवंतुपुनःकृत्वालक्षांशेनतुविध्यति ७८० आरंतीक्ष्णंतथानागं
वंगंशुल्वंतथैवच एतेषांवेधनंकृत्वागुटिकांहेमवेष्टिता ७८१ निवेश्यवक्त्रमात्रअन्तर्धानमवाप्नुयात् संचरोदिव्यदेहस्तुअ

वध्योदेवदानवैः ७८२ अग्निशस्त्रविषादीनांभयंतस्यनजायते ब्रह्मायुर्भवेतसिद्धोजरारोगविवर्जितः ७८३ प्रकाशमूषयामु
त्वांसित्वांचैवतुद्रावयेत् श्वेतोदकेनिषेकतुसप्तवाराणिदापयेत् ७८४ तारंतुभवतिशुभ्रंदिव्यंवण्डनिभंशुभं ७८५ इतिकुण्डोद
ककल्पः अथघृतोदककल्पः अस्तिदक्षिणापथेभद्रंनामाधिष्ठानं तस्मात्पुरतःषड्योजनेहारावलीनामग्रामः ७८६
तत्रसिद्धेश्वरोनाम देवस्तस्यनैर्ऋत्यांतृणपल्लीतिष्ठति तस्याःपूर्वेणधनुःशतान्तराणि घृतोदकंतिष्ठतितस्मिन्नायतनेत्रिरात्रिनमुपोष्यि
त्वा त्रिकालंसिद्धेश्वरपरमभक्त्यापूजयेत् ७८७ देवस्यदर्शनाधिकचमत्कारचितांपूजांकृत्वाततःपिबेत्क्षुधातृषार्तनचाध्यते
७८८ त्रिसप्तकंपिबेद्वस्तुनियतंक्षीरभुङ्नरः द्विरष्टवर्षाकृतिभुक्वलीपलितवर्जितः ७८९ सर्वव्याधिविनिर्मुक्तोजीवेत्सब्रह्मणो
दिनं भद्रंगाद्दक्षिणेपार्श्वेखरवापीनामग्रामस्तस्यपूर्वेणमंदोदरीकोनामपर्वतः मंदोदरीनामग्रामस्तस्यपूर्वेणपर्वतिकातिष्ठति
७९० तस्यपश्चिमशिखरे तस्यापिपश्चिमपार्श्वेघृतवृद्धिकानामपर्वतिकातिलामण्डपकुण्डंतिष्ठति ७९१ तस्यपश्चिमपार्श्वेपंच
कुण्डानिहस्तिपदमात्राणि घृतपूरितानिसंति ७९२ तद्घृतोदकंनिर्विकल्पंपिबेत् पीत्वातस्यपश्चिमभागेक्षीरवृक्षास्तिष्ठतितस्य
तलेमूर्छितःपतेत् ७९३ दिनार्द्धेनस्वस्थोसमन्वारिभवति चतुर्मासप्रयोगेणबालार्कसमप्रभोभवतिक्षुत्पिपासावर्जितश्चजी
वेच्चन्द्रार्कतारकं ७९४ अस्तिभाद्रिंगाधिष्ठानंतस्यदक्षिणदिशायांद्वादशगव्यूतिगत्वातुंबकवापीनामग्रामस्तस्यपूर्वेणमंदरी
नामपर्वतिकातिष्ठति ७९५ तस्यपश्चिमदिशायांपाम्भिजीकुण्डतडागिकातिष्ठति ७९६ तस्यडोंगरिकायाउपरिशिलापंचह
स्तप्रमाणानिकुण्डानितिष्ठन्ति ७९७ तत्रघृतपानीयंतत्रघृतपानीयस्यपश्चिमकुण्डेकुलत्थान्शालीफूत्कारायित्वाततः
क्षीरेणसमांपीत्वाजीर्णांतःक्षीरभोजनोवलीपलितहीनःसहस्रजीवीभवेत् ७९८ अथवातान्समादायशालीफूत्कान्विच
क्षणः घृतेनपाययेज्जन्मजरामरणवर्जितः ७९९ षण्मासप्रयोगेणसहस्रवर्षाणिजीवतिपरमायुर्भवति ८०० तत्रैवकुण्डे
षण्मासिक्योहरीतक्यःसंस्थाप्यशैलीभूताःसमुद्धृत्यपूर्वोक्तेनविधिनातत्रारात्वाद्वंप्रमाणासनशतानिजीवति ८०१

घृतमधुनाषण्मासंसेवतोनवनागबलोशतजीविभवति ८०२ आयसेमृण्मयेवापात्रेकृत्वाबलिभक्तंसिद्धंभक्षयेत् पिबज्जलंपरिहारेण
जितेन्द्रियस्समवर्षप्रयोगेण महाकल्पजीविभवति ८०३ इंगुदीत्वचात्रिफलाशैलीभूतानिकारयेत् वंगस्यप्रतिवापेनवंगस्तंभयतेध्रुवम्
८०४ विषग्रंथिमध्येप्रक्षिप्यरसगंधौसबीजको तथारसोपरसौप्रक्षिप्यसर्ज्जरसेनवेष्टयेत् ८०५ शिलोदकेप्रक्षिप्यशैलाश्वमान्या
कृष्यचूर्णयेत् सहस्रवेधीभवेन्नात्रकार्याविचारणा ८०६ इतिघृतोदककल्पः अस्तिदक्षिणापथेअलच्चपुरंनामाधिष्ठानंतस्यो
त्तरेणदण्डेश्वरोनामपर्वतस्तत्रतडागिकातिष्ठति ८०७ तस्याःपूर्वभागेगव्यूतिमात्रेणवृक्षत्रयंतिष्ठति ८०८ तेषामुत्तरेणत्रिभि
र्धन्वंतरैश्चतुरस्राशिलातिष्ठति ८०९ तस्यामध्येकृष्णोदकंतिष्ठति तस्मिन्बिलेतैलक्षेपमात्रेणकृष्णोदकमूर्ध्वंनिर्गच्छति ८१०
तद्गृहीतव्यंतेनकृष्णोदकेनशरवःकृष्णश्चेद्भवतितर्हिकृष्णोदकमितिबोद्धव्यं ८११ पश्चात्तदुदकमामलकामात्रंकृत्वाघृतेनस
क्षौद्रंभक्षयेत् पलितानिनाशयतिवयस्तंभंचकरोति शतपंचदशवर्षाणिजीवति ८१२ इतिकृष्णोदककल्पः अथशैलोदक
कल्पंव्याख्यास्यामीहतत्त्वतः येनोपयुक्तमात्रस्तुनरःकल्पायुषोभवेत् ८१३ शैलंतद्द्विविधंज्ञेयंनानादेशेषुसंस्थितं किंचित्रं
निमिषार्धेनवेधयेच्चनसंशयः ८१४ केचिच्चदिवसेवेधमन्यंचैवत्रिरात्रिके किंचित्समाहिकज्ञेयंकिंचित्पक्षाच्चवेधकं ८१५ किं
चिच्चमासिकंविंद्यादन्यच्चषण्मासिकंतथा संवत्सरेणचान्यानिवेधयंतिनसंशयः ८१६ सर्वंतुल्यफलंज्ञेयंसर्वंचैकपराक्रमं सर्वे
षामेवमेवैकोविधिर्नविविधोभवेत् ८१७ अस्तिलाडविषयेकपिलायांपारेश्वरंनामायतनं तस्मिन्स्थानेतुविज्ञेयंमासिकेतुविच
क्षणैः ८१८ श्रूयतेचमहादेविराठायांविषयेतथा भीमादेवीतिविख्यातात्रिषुलोकेषुविश्रुता ८१९ मातराभीरेवोरेतुमासिकं
तुविचक्षणैः सुवर्णाक्षेचधूम्राक्षेदेविकायांतुमासिकं ८२० उदाहृतंनागदहेमासिकंहितथैवच अरंबीराख्यंषभ्रारेभ्रमरपा
रेतुदपुरंदरस्य दक्षिणेनगव्यूतित्रयेणनदीकारानामवहति तत्रशैलोदकंत्रिदिवसिकंरवंबातकमास्तिस्तंभेनगरेभितनप
ल्लिकाचण्डीग्रामस्तत्रसिद्धायतनेदिवसिकम् ८२१ अस्तिपारिपात्रेनागमण्डलोनामपर्वतस्तस्यैशानदिग्भागेक्रोशत्रयेरंग

+ गुर्जरेमसिद्धं

वटयक्षिणीनामदेवीतस्याः सन्निधौ क्षणवेधीशिलोदकं ८२२ नीलगिरौ सौभाग्यपूरपूर्वतोरोदभीमगुटिकायादक्षिणतः सप्त क्रोशेडोंगरीतत्रक्षणवेधीशिलोदकंप्रोक्तमुत्तमाधममध्यमं ८२३ निमेषिकांदिवसिकांत्रिदिनपक्षमुत्तमं मासिकंचात्रिपक्षंच द्विमासंचैवमध्यमं ८२४ षाण्मासिकंवात्सरिकंतुमध्यमंतुप्रकीर्त्तितं काचंशंखंतथापर्णशैलंकालेनजायते ८२५ तत्काले चोपयोगेनकर्त्तव्यंसाधकेनच शैलंतत्त्रिविधंप्रोक्तममृतंविषमेवच ८२६ खेचरंतुतृतीयंस्यादेवंतत्त्रिविधंभवेत् जलंतत्र समुत्तीर्यशोधयित्वापरीक्षयेत् ८२७ पूरयेत्तिघटेपूर्णंतत्रहिंगुंविनिक्षिपेत् हरतेतस्यतद्गंधममृतंतद्विनिर्दिशेत् ८२८ कटुतिक्तकषायंदुर्धूतंतन्महामते सर्वाकारंचयत्प्रोक्तममृतादपिचामृतं ८२९ सदृजंग्रहरंगंधमुत्करंतस्यसाधकम् मत्स्यवच्चोसृजेद्गंधंवर्जयेत्तादृशंजलं ८३० गंधकंतालकंचैव क्षेपयित्वाशिलाजले घटेचबुद्बुदाकारंविषंविषजलं भवेत् ८३१ पुराणमतिमान्वार्यगतिंज्ञात्वासुदुर्लभां सर्वशास्त्रेषुगीयंतेइतिशास्त्रमुदाहृतं ८३२ शैलोदकंचाष्ट गुणंक्षीरेवेषाचयेत्तुयः यावत्क्षीरावशेषंतुतत्क्षीरंपिबतेनरः ८३३ एकविंशद्दिनंयावद्वलीपलितवर्जितः घनानीवि उदेहस्तुसहस्त्रायुर्भवेन्नरः ८३४ अथशैलोदकंगृह्यकुलत्थान्पाचयेन्नरः तेषांमासोपयोगेनद्व्यष्टवर्षाकृतिर्भवेत् ८३५ तदुदकंपरंगृह्यत्रिफलायाःपलाष्टकं षोडशांशावशेषेणतैलस्यकुडवंपचेत् ८३६ तत्तैलेनशिरोभ्यंगंवलीप लितनाशनं दद्रुविचर्चिकाकुष्ठंनाशयेन्नात्रसंशयः ८३७ शैलोदकंहिमंत्र्यूषेपिबेच्चचुलकत्रयं षण्मासात्पलि तहन्तिजीवेच्चन्द्रार्कतारकं ८३८ शुद्धसूतस्यमासैकंशैलोदकेनमर्द्दयेत् नखपिष्टंभवेद्यावद्गोलीसूतंतुधारयेत् ८३९ सुदिनंप्राप्यमेधावियावत्तावत्सहस्त्रकं वलीपलितनिर्मुक्तोश्चन्नत्परतांव्रजेत् ८४० तमेवसूतंकंगृह्यहे मेनसहवेष्टयेत् गुटिकांतांमुखेक्षिप्यह्यंतरिक्षंव्रजेन्नरः ८४१ विचरेत्पृथिवींसर्वांसशैलवनकाननां षड्भिःहरते द्रव्यंजीवेच्चन्द्रार्कतारकं ८४२ श्रीतारणबालदुर्गपश्चिमतोयोजनेकेजिरवालेदक्षिणतोगिरिचारणेक्षणवेधिशैलोद

कंतिष्ठति ८४३ तज्जलंतत्क्षहारिमंथेडलेमधुनासह तृषितस्तुपय:पीत्वानान्यंतोयंकदाचन ८४४ पलाशबीजा
निसंग्रह्यशैलकुण्डेनिधापयेत् शैलीभूतंतदाहृत्यरक्तैकंचूर्णयेद्बुध: ८४५ घृतेनमधुनायुक्तंलिहेद्विंशदिनानितु बली
पलितनिर्मुक्तोजीवेच्चन्द्रार्कतारकं ८४६ बलेनकुंजरायंबालेगेन्बानिलोपमः कुण्डस्यैवतथाधीनामेकविंशतिमाहरेत्
८४७ शिलीभूतंसमुद्धृत्यचूर्णमेकंदिनेदिने घृतेनमधुनायुक्तंप्रातरेवतुयोलिहेत् ८४८ एकविंशद्दिनं यावदज
रामरतांव्रजेत् तेनैवमानवास्नात्वायेऽर्चयन्तिमहेश्वरं ८४९ संयताश्चजितक्रोधाकुण्डस्यारंधयंतिते अग्निकार्यंच
कुर्वन्तिपितृदेवनिबंधनं ८५० शैलीभूतंतुतत्कृत्वातारेश्चहेमकंद्रवेत् उदकंविपदंच्चैवरखल्वपाषाणमर्दयेत् ८५१ मा
तुलिंगस्यतोयेनसूतकेनसमान्वितं हरिद्राकंदकंगृह्यसुषिरंतत्रकारयेत् ८५२ पूरयेत्तेनकल्केनाकिंशुकेनरसेन
च निषेकेनभवेद्धेमनात्रकार्याविचारणा ८५३ सर्वदोषविनिर्मुक्तंहेमंहेमवरंभवेत् हरितालंचसंगृह्यस्थापयेच्च
शिलोदके ८५४ शैलीभूतंचतत्तालंततः क्षौद्रेणभावयेत् भीतवापंततोदत्वासर्वलोहानिविंधति ८५५ कांचनंजा
यतेश्रेष्ठंदेवाभरणभूषणं शैलोदकमिदंपुण्यंबहुतत्त्वगुणान्वितं ८५६ प्रतिलभ्यान्नरोलोकेयस्यतुष्टोमहेश्वरः त्रि
विधंतस्यतत्कार्यंतत्फलंतदवाप्नुयात् ८५७ धूर्तोऽप्यंगशरीरस्थकृतंव्यायामतत्पर: वज्रदेहोमहाकायोविषशस्त्रा
ग्नितोनभीः ८५८ नहिदुःखंभवेत्किंचिदिहलोकेकदाचन तज्जन्यगुणसम्पन्नोविद्याढ्यश्चमहाबल: ८५९
सर्वव्याधिविनिर्मुक्तोजीवेच्चन्द्रार्कतारकं आयसेमृण्मयेपात्रेपचनंतत्रकारयेत् ८६० ताम्रतारेतुकर्त्तव्यमितिशास्त्र
समुच्चयं ८६१ इतिशैलोदककल्प: अथात:संजीवनीकल्पंव्याख्यास्याम: अस्तिदक्षिणदिग्भागेपारिवल्ली
नामग्रामस्तस्यसमीपवर्त्तीच्चवनकाररव्यानामग्रामस्तस्यवायव्यदिग्भागेनीलनाथश्चतिष्ठति ८६२ तस्यपूर्वदि
ग्भागेचवनकारव्यानदीशुभातस्यास्तटेदुर्गादेवीतदग्रेगिरिविवरः तस्याध:परमात्रंतुकुण्डंसंजीवनीजलमास्ति

८६३ तत्रोदकेतु प्रक्षिप्य मुष्ककाष्ठतृणानिच अंकुरंमुंचतेतच्च अहोरात्रं नसंशय: ८६४ एतत्तुप्रत्ययंदृष्ट्वापश्चा
त्कर्माणिकारयेत् अथजलग्रहणमन्त्र: ॐ मायावतीअप्रतिहतगतिरूपेत्वं शतसहस्रपरिवारिनी एहिएहिक्षेत्रपाल्
तिममरक्षांकुरुकुरु दिशांबंधय २ सिद्धिंकुरु ठः ठः स्वाहा ८६५ अनेनैवतुमन्त्रेणआत्मरक्षांतुकारयेत् अलांबुकेनपात्रे
णगृण्हीयात्तु विचक्षण: ८६६ मधुंचप्रक्षिपेत्तत्रपश्चात्तोयंच गृह्यते क्षेत्रपालबलिंदत्वापश्चात्पूजांतुकारयेत्
८६७ तोयंचुलुकमात्रंतुशुचिर्भूत्वापिबेन्नर: तत्स्नानाच्चमहादेवीयाभिर्मूर्छितोभवेत् ८६८ तदूर्ध्वंलभतेसंज्ञां
दिव्यदेहोभविष्यति नवनागबलोभूत्वाजीवेच्चन्द्रतारकं ८६९ तत्तोयंकर्षमात्रंतु गोमूत्रेणपिबेन्नर: एकविंशति
मात्रेणवलीपलितवर्जित: ८७० योजनानिशतंगच्छेत्पुनश्चागच्छतेक्षणात् कामरूपीभवेद्देवीयत्रेच्छातत्रगच्छ
ति ८७१ हेमाभ्रपारदंचैवतेनतोयेनमर्दयेत् स्वेदयेत्सप्तरात्रंतुधरीवेधीचवेधकं ८७२ अथवातद्रसंचैवमधु
नासहभक्षयेत् एकमासप्रयोगेणकामकल्पोभवेन्नर: ८७३ जीवब्रह्मादिनेकंतु स्वेच्छयाविचरेन्महीं पुनरन्यत्प्रव
क्ष्यामिभूमियहनिवासिनां ८७४ त्रीनंजलीन्पिबेत्तोयंमूर्छित: प्रहरत्रयं मूर्छांतेचैवभुंजीत क्षीरान्नंषष्टीकोद
नम् ८७५ एकविंशतिरात्रेण तेनैवतेनकारयेत् सप्तपातालवासीचदैत्येन्द्रणसमोभवेत् ८७६ युवाचकामरूपी
स्याल्लोकत्रयेगमिष्यति अवध्य:सर्वदेवानांछिद्रांपश्यतिमेदिनीं ८७७ नानागुणसमोभूत्वाजीवेद्ब्रह्मायुषोभवेत्
अस्तिदक्षिणदिग्भागेगोदावरीनाम महानदीतस्यादक्षिणदिग्भागेनासिकनामपत्तनमस्ति ८७८ तस्यवायव्यादिग्
भागेबहुलानामपर्वत: तत्रैवभृगनारब्याकपारमध्येसंस्थिता तत्रसंजीवनीयंतोयंविख्यातंबहुजनेषुच ८७९ ॐ
अमृतंकुरुमेदेहं ठः ठः स्वाहा सर्वकल्पविधानेनसर्वंकारयेत् ८८० उदकंमनःशिलायुक्तपारदेनतुमर्दयेत् मुखेप्रक्षेप
मात्रेण अदृश्योभवतिध्रुवं ८८१ यंयंपश्यतिदृष्टांतंतंतंवाप्यंभविष्यति पुण्यक्षेत्रंकथयामिकरहाटेनकृत्यादिशायां

८८२ ॐदुंबाररसाग्रामस्तस्याग्रेणविभागत: पर्वतंदृश्यतेतत्रास्थिरंसंजीवनीजलं ८८३ यत्रकुत्रान्यक्षेत्रेषुपूर्व
वत्कारयेत् ८८४ इतिनानाक्षेत्रेसंजीविनीकल्प: कैलासशिखरासीनंदेवदेवंजगद्गुरुं पृच्छतेस्मसतीशं
भुरसायनमनुत्तमं ८८५ ईश्वरोवाच शृणुदेवीप्रवक्ष्यामित्युत्तमंतरसायनं. चन्द्रोदकाख्यमुदकंतिष्ठतेचमही
तले ८८६ लक्षणंतस्यवक्ष्यामिशृणुध्येकाग्रमानसा वृद्धौचन्द्रस्यवर्धेतचन्द्रेक्षीणेहृतेदिदं ८८७ तेनसाधर्मयोगे
नचंद्रोदकमितिस्मृतं चंद्रोदकेनचंद्रस्यपौर्णमास्यासुधीनर: ८८८ देवानास्तवनंकृत्वाशुचिर्भूत्वासमाहित:
अलांबुकेतुसंगृह्यादिनैकंपरिरक्षयेत् ८८९ सर्वजनसमक्षंतद्रक्षयेद्विषपूर्वकं तेनाजरामरोभूत्वामोदतेपुरुषोत्तम:
८९० चन्द्रोदकंपलंचैकंघृतस्यतुपलंतथा मधुलेपनसंमिश्रमेकांतेबुद्धिमान्पिबेत् ८९१ रक्षांकृत्वातुविजनेशुचि
र्भूत्वाविचक्षण: सप्तरात्रप्रयोगेणवलीपलितवर्जित: ८९२ द्विषड्वर्षाकारश्चयौवनस्थ:पुनर्भवेत् पलपंचप्र
योगेणशतबाधानजायते ८९३ क्षीरंपिबेत्तुजीर्णान्तेक्षीरंचैवतुभोजयेत् पलपंचाशमात्रेणजीवेच्चब्रह्मणादिनं
८९४ पलशतप्रयोगेणद्वितीयइवशंकर: त्रिनेत्रोवृषभारूढोह्यर्धनारीश्वरस्तथा ८९५ तस्यमूत्रपुरीषेणलोहं
भवतिकांचनं अयस्कांतसमायुक्तंमर्दयित्वाक्षणंतथा ८९६ गुटिकांबंधयित्वातुत्रिलोहेनचवेष्टितां प्रक्षिपेद्वद
नेप्राज्ञोमासमेकंनिरंतरं ८९७ अदृश्योजायतेचैवयत्रेच्छातत्रगच्छति गुटिकयासर्वलोहानिशतांशेनवकांच
नं ८९८ चन्द्रोदकपरीक्षांतुकथयामिचतत्वत: दिवातत्पीतमात्रेणनि:संज्ञ:पतितेभुवि ८९९ उत्थितस्तिष्ठ
तेतावद्यावद्देवीनिशाभवेत् पश्चात्त्वमुकविक्लिन्नपाचस्तस्यैवजायते ९०० पश्चात्तुध्यायतेचन्द्रंश्रवंतंपरमामृ
तं पुनश्चजायतेतस्यमानुषत्वंनसंशय: ९०१ पिबंतियेनरास्तोयंसिद्धंसिद्धत्वसाधक सिद्धमूत्रपुरीषेणलोहंभव
तिकांचनं ९०२ प्रियाभावोस्यसिद्धस्यशरीरंकुलीशोपमं सिद्धश्चतिष्ठतेतावद्यावदाभूतसंप्लवं ९०३ तलहारिमं

गपथे अजेरोहं संबंधं माठराविद्याध्यनपश्चिमेनक्रोशद्वयेन कुण्डीनामग्रामस्तस्यपश्चिमेतोडोंगरीस्तिष्ठति १०५ तत्स्थानेदेव
दरीनामभण्डारिकाआस्तेतस्याःकाहूयतेनसोदनीनामकुण्डेचन्द्रोदकंतिष्ठति १०६ तस्यकुण्डेसमीपस्थंवासंकृत्वाकृतरसावि
धानतःपौर्णमास्यांचन्द्रवारविख्यात्वंशेकर्पटपानीयंगृहीत्वातद्वस्त्रंगालयित्वाजलमालांबुकेगृहीत्वासमतुल्येनससरात्रयाव
त्पिबेत् १०७ अनेनविधिनारसंरसायनंचभविष्यति १०८ इतिचन्द्रोदककल्पःसम्पूर्णः अस्तिदक्षिणदिग्भागेअंगुष्ठोनाम
पर्वतःनूनंतत्रोत्तरेभागेधारोरम्यश्चपश्चिमे १०९ अर्धयोजनमात्रेणरक्तोदकंचतिष्ठति पूर्ववत्कारयेत्कर्मसिध्यतेनात्रसंशयः
११० हिमवतश्चेशानेनाम्नाबदरीकाश्रमंतस्योत्तरदिशायांचसमीपेनातिदूरतः १११ प्रसिद्धंविष्णुनारक्षितंनारायणकरोद्भवं पि
तामहकपालस्थंपरामहेश्वरेणकृतं ११२ कपालाकृतितत्क्षेत्रंतोयंलाक्षारसप्रभं पूर्वोक्तेनविधानेनकर्मकुर्यात्प्रयत्नतः ११३
तत्क्षेत्रस्थस्यापिपानात्प्रातश्चुलुकैकांपिबेत् नाशयेत्सर्वरोगांश्चकालमृत्युंजरानपि ११४ चुलुकद्वयंतुमध्याह्नेपानपामात्राद्भवेन्न
रः अश्रुतान्यपिशास्त्राणिज्ञानंविद्याश्चतुर्दश ११५ मुखमेवभवेत्कर्त्ताद्वितीयश्चतुराननः अपराण्हेत्रिचुलुकंतत्तोयंचपिबेन्न
रः ११६ अघोदृष्टिःप्रजायेतविलतलांतर्गतानिच समस्तानिविधानानिगुटिकाचरसौषधी ११७ नानाद्रव्याण्यभिज्ञानिपश्यंतिच
नसंशयः क्षुत्पिपासाविनिर्मुक्तःपर्यटेद्भुवनत्रयं ११८ रसायनसहस्त्रेणसेव्यमानःसतिष्ठति समानजीवितंतस्यइत्याहपर
मेश्वरी ११९ इतिमन्त्रपदानिभवति ॐजांहृदयायनमः ॐजींशिरसेस्वाहा ॐजूंशिखायैवषट् ॐजैंकवचायहुं ॐजौंने
त्रत्रयायवौषट् ॐजःअस्त्रायफट् ॐनमोभगवतेवासुदेवायहरिभ्योचस्मरोचिरिआयुकुरुकुरुकरीरवाक्षणीठठः क्षेत्रपाल
मन्त्रः १२० इतिबदरिकारक्तोदककल्पः अस्तिदक्षिणापथेनासिकानामाधिष्ठितंतस्यादक्षिणेनदीतिष्ठति १२१ तस्याउत्त
रेणपंचगव्यूतिमात्रेकृष्णोदकंतिष्ठति कटुतुंबकेनोधृत्यहारकेनध्मांतंतारंभवति १२२ चूतस्यसदृशैःपत्रैःक्षीरिणीचत्रिपत्रि

का पीशाल्काक्षीरबहुलासादिव्यापरमेश्वरी १२३ तच्छायायांक्षिपेत्कीराम्रियंतेनात्रसंशय: तस्याअंतरंसंगृह्यसूतेनचविमर्दयेत् १
२४ घटिमात्रेणचभवेद्गोलकंचराशिप्रभं धाम्यमानोरसोवह्नौतिष्ठतेयावदिच्छया १२५ तेनैवस्तुल्वपत्राणिशतांशेनतुवेधये
त् धाम्यमानंततोवन्हौनिर्बीजिंकनकंभवेत् १२६ कणवीरसदृशै:पत्रैर्नीलांजनसमप्रभै: रक्तशाखासदापुष्पैर्भाक्षीरप्र
वाहिनी १२७ तथैवक्षणमात्रेणरसास्तिष्ठतिनान्यथा शुल्वपत्राणिलेपेनसहस्रांशेनविंधति १२८ स्वर्णंभवतिनिर्बीजंदेवा
भरणभूषणं ॐचंद्रेतालगयेणेलायिमहादेवभेरेचलेचलवलायिपावीतिडहेमोसिद्धिगुरुप्रकारचर्मरेभ्रोतिष्ठतिपवरद: मंत्र:
१२९ अथउष्णोदककल्प: उष्णोदकंयत्रकुत्रदृष्ट्वास्नात्वासमाहित: तत्रैवचणकान्सिक्त्वारात्रौवैबुद्धिमान्नर: १३०
भवंतिकोमलान्प्रातर्भक्षयेत्तंदिनेदिने एवंमासप्रयोगेणजायतेकांचनप्रभ: १३१ सर्वव्याधिविनिर्मुक्तोजीवेद्वर्षशताष्टकं ए
कवर्षप्रयोगेणजीवेच्चंद्रार्कतारकं १३२ तस्यमूत्रपुरीषेणशुल्वंभवतिकांचनं उष्णोदकंचकासीसंगन्धपाषाणसंयुतं १३३
चतुर्थांशेनरसकंरसभागंविनिक्षिपेत् खल्वेचमर्दयेत्सर्वंनष्टपिष्टंक्षणेनतु १३४ तेनलेपितमात्रेणशुल्वंभवतिकांचनं निषि
क्तंतेनतोयेनप्रतिवापंददेद्बुध: १३५ शुल्वंचजायतेहेमचन्द्रार्ककांचनंभवेत् तारं घातेनमात्रेणसिक्तंकनकमादिशेत्
१३६ उष्णोदकंचभक्ष्यालप्रभातेभक्षयेन्नर: तिलमुष्टिंभक्षयेच्चप्रभातेनित्यसेवाहि १३७ मासासिद्धप्रयोगेणजीवेद्वर्षश
तद्वयं पुनरन्यत्प्रवक्ष्यामिद्रव्यस्यकरणंमहत् १३८ रसंगंधंकारसकं तथादरदमाक्षिकं एतदुष्णोनतोयेनजायमानंप्र
मर्दयेत् १३९ तेनैवतारमथवासीसपत्राणिलेप्यविध्माम्यधामयेत् चतुर्द्विसिकंभवेद्धेमदारिद्र्यस्यविनाशनं १४० चन्द्रार्कपंच
द्विशिकमनेनैवक्रमेणतु अनेनलिप्ताशुल्वस्यपत्रांविध्माम्यधामयेत् १४१ षोडशकार्णिकस्वर्णंभवत्येवनसंशय: अथवा
हेमसितारभा १ अभ्रकसत्वभाग १ उष्णोदकेनसंमर्द्यरसगंधसमान्वितं १४२ जायतेगुटिकादिव्यापुनस्तत्रोदकंक्षिपेत्
मासैकेनसमुद्धृत्यमुखेप्रक्षिप्यसाधक: १४३ वज्रकायोमहादेवीवलीपलितवर्जित: कण्ठेतांगुटिकांधृत्वामध्वाज्येनापिबेत्

सुखी १४४ दिनेदिनेपलंपावज्जीवेच्चन्द्रार्कतारकं तस्यमूत्रपुरीषेणशुल्वंभवतिकांचनं १४५ कुलित्थंपच्यतेतोयेभक्षयेच्च
दिनेदिने तृषितस्तुपिबेत्क्षीरंगव्याजमथमाहिषं १४६ स्नानंकुर्यात्तुतत्तोयेसाधकोविजितेन्द्रियः संवत्सरप्रयोगेणजीवेद्व
र्षसहस्रकं १४७ उष्णोदकभागः १ क्षीरभागः १ त्रिफलोदकभागः १ एवमावर्त्यकर्त्तस्यपात्रेपायसंपचेत् १४८ भक्षयेच्च
त्रिसप्ताहंवलीपलितवर्जितः जीवेद्वर्षसहस्रंतुनात्रकार्याविचारणा १४९ इतिउष्णोदककल्पः अथबदरीक्षेत्रकल्पः
सनत्कुमारसंहितासारे नारदंप्रतिसनत्कुमारउवाच स्थूलंसूक्ष्मंततःसूक्ष्मंशुद्धंचेतिचतुर्विधं बदरीक्षेत्रमाहुर्वैसारूप्यादि
पदक्रमात् १५० कण्वाश्रमादियक्षंतुपर्यंतंस्थूलमुच्यते ततःविष्णुप्रयागांतंसूक्ष्मंविद्धिमुनीश्वर १५१ आकुबेरादीलतस्मा
त्ततःसूक्ष्मंमहामुने ततःसरस्वतीतीरपर्यंतंशुद्धमुच्यते १५२ वासेमृतौचदानादौजपहोमार्चनादिषु शुद्धश्रेष्ठाधलाभेतुसू
क्ष्मादौतत्समाचरेत् १५३ वृश्चिकार्धंगतेसूर्येवैश्वानरनमस्कृयात् तीर्थाद्दुपरिवस्तव्यंनमर्त्यैर्विष्णुचक्षुभिः १५४ यावन्मेषंन
यात्येषसूर्योराशिंमहामुने बदरीनाथविश्वात्मन्विघ्ननाशायमेप्रभो १५५ भवत्क्षेत्राधिवासेस्मिन्भवत्याराधनेप्रभो इ
तित्रिसंध्यंयोविद्वान्वदेतबदरींप्रति १५६ प्राप्नोत्यसौनिरातंकफलंसर्वंहिनारद अत्रकाम्यमकुर्वाणोबदरीनाथमंदिरे १५७
जपाद्यंक्षिप्रमेवष्यत्यस्तशंकततःपरं उर्वशीकुण्डसंभूतकुल्याचास्माद्विनिःसृता १५८ तत्रस्नात्वाचपीत्वाचमण्डलाद्रूप
वान्भवेत् चित्रदद्रुादिरोगार्त्तोप्यत्रमण्डलमात्रतः १५९ सुरूपःक्षीणरोगश्चजायतेनात्रसंशयः योदेवानामर्चजलाकूर्मधारां
बुसाष्टकं १६० शतंपिबतिषण्मासंयोसौविष्णुप्रियोभवेत् अघ्रनपतिमंत्रेणतज्जलंपरस्तथापिबेत् १६१ प्रल्हारसदृशोविष्णोः
भवेदेषनसंशयः तन्मूलकुण्डंयहरिमार्गीयातिकदाचन १६२ सएवविष्णुभक्तस्याग्र्यःकिंवृथालांछनैःपरैः स्वर्णधाराभिधं
तीर्थंतस्माद्व्यूतिमात्रतः १६३ इतोनरगिरिशिखरंमेरोःसाक्षाद्विनिःसृतं स्नात्वातत्रयथान्यायमुपोष्यचदिनत्रयं १६४
उपासीनोहरिंपश्येत्कुबेरंधनदंप्रभुं विघ्नास्तत्रमहांतःस्युर्विमुखस्यजनार्दनात् १६५ तच्छांत्यैबदरीनाथमर्चयेत्याकसमाहि

तः प्रसन्नोधनदोदद्यात्पाषाणंवामृदादिकं १६६ तत्सर्वंस्वर्णतामेतिनूनमेतन्मयोदितं अस्मिन्जन्मनिचेन्मर्त्योनप्रा
प्नोतिधनंमहत् १६७ अमुष्मिन्नैवहीनःस्यात्कुबेराद्धनसम्पदा वैरवानसमहातीर्थेसंवत्सरमनाकुलः १६८ स्नात्वा
फलादिभक्ष्यःसन्मृत्युंजयतिदुर्जयं समलक्षंजपेत्तत्रप्रणवंवेदसारकं १६९ सर्ववेदार्थतत्वज्ञोजीवन्मुक्तोभवेद्ध्रुवं
मेषसंक्रमवर्षादौगंगायांस्नातिसादरं १७० यत्रशेषभवेत्तीर्थेतद्भवेद्भुक्तिमुक्तिदं स्नात्वातत्रसकृद्दापिनसर्पेभ्योभयंव्रजेत्
१७१ दृष्ट्वान्नपिमुनेशेषप्रसादात्तज्जलाप्लुतः काम्यांतराणिषण्मासाद्भुक्तिंवामुक्तिमेवच १७२ देवदेवस्यशेषस्यप्रसा
दान्मनुजोव्रजेत् सत्यासत्यपरीक्षावाश्रीशेषस्याग्रतोभवेत् १७३ सत्यंवदन्मुभंयायादसत्यंदुःखमेवच चतुर्दश्यांनि
राहारःशेषंयोभ्यर्चयेन्नरः १७४ पक्षेपक्षेचषण्मासाच्छास्त्रपारंगतोभवेत् बदरीनाथदेवस्यवामभागेमहत्तर १७५
इन्द्रधारेतिविख्यातंतीर्थमस्तिमहामुने वत्सराणांत्रयंतत्रस्नात्वाशेऽर्ध्वसहस्रकं १७६ इन्द्रस्य षानिमंत्रंतुजपन्निंद्रस
मोभवेत् वेदधारासुयःसाक्षाच्चतस्त्रेषादरेणवै १७७ स्नातिषण्मासतःशुद्धोव्रात्यत्वादतिवर्तते वसुधाराभिधंतीर्थंद
ष्टप्रत्ययकारकं चतुर्विधफलप्राप्तिसाधनंनात्रसंशयः १७८ अतिपातकिनांनृणांनास्तिमूर्ध्नंचबिंदवः १७९ पतंतिमुनि
शार्दूलबदरीनायकाज्ञया स्नात्वाधर्मशिलापृष्ठेनिषण्णोनिश्चलोमुनिः १८० उपास्तेभक्तिनम्रात्मायोसौसायुज्यमश्नुते
वसुवर्णमनुंतत्रवस्त्रलक्षंजपेन्नरः १८१ विमानेनार्कवर्णेनवैकुंठयात्यसंशयं सोमकुण्डमितिख्यातंदृष्टप्रत्ययकारकं सो
मात्मकंमहातीर्थंसर्वकामसमृद्धिदं सोमेनसहवर्धंतेह्रसतेचमहामुने १८३ तत्रादिव्यंतपस्तप्त्वागतोवस्थामिमांविधुः
प्रसन्नोबदरीनाथःश्रेष्ठंसर्वग्रहेष्वपि १८४ तत्तीर्थेस्नानजप्यादिसर्वकामप्रदंनृणां शुक्लपक्षेजपन्मंत्रंषण्मासात्सिद्धिमेष्य
ति १८५ अस्तिसत्यपदंनामतीर्थंत्रैलोक्यदुर्लभं तत्रस्नानेनसारूप्यंविष्णोर्यात्यधमःपुमान् १८६ अदृश्योपिभवेन्मर्त्यो
रंतर्धानंयदीच्छति मण्डलादेवदेवर्षेनात्रकार्याविचारणा १८७ हरिहेतिसमीपस्थेचक्रतीर्थेतुमानवः स्नात्वादिनेदिनेजा

प्यात्सुदर्शनमनुत्तमं ९०८ मण्डलाद्भुत्ततोसिद्धिमरीणामप्यकंप्यतां दैत्यराक्षसजेतृत्वं युद्धादावाबभीततां ९०९ कल्पांघ्रिपतयं
बिद्धन्कामधेनुंचभक्तितः परिक्रम्यप्रणम्याथशतस्तोतःसुसम्भृतः ९९० अभ्यर्च्यबदरीनाथंश्रीकराशास्तरंजपन् अचलस्संमहा
लक्ष्मीःकिंकरीवानुयायिनी ९९१ द्वादशादित्यतीर्थेषु भानुवारेषुसप्तसु स्नात्वामिरन्नोमौनेनबृहत्सामप्रकीर्त्तयेत् ९९२ आसंध्य
भक्तिनम्रात्मारात्रौभुंजीतवाग्यतः अर्चयित्वाहरिंभक्त्यासहस्रांकिरणात्मकं ९९३ निरोगस्तेजसादीप्तामित्वासूर्यस्यमण्डलं वी
तशोकोहरिंगच्छेद्यतोनावर्त्ततेपुनः ९९४ अस्माकमुत्तमंलत्रमंत्रंजप्याद्दनाकुलः सुवर्णसंरक्षस्ताहस्रं बीर्त्यालोकोत्तरोभवे
त् ९९५ व्यासपुस्तकपार्श्वेतुशम्याप्रासेऽथवामुने अध्यात्मचिन्ताकुर्वाणोव्यासंपश्यतिवत्सरात् ९९६ तत्प्रसादाद्भवेत्सद्यः सर्व
ज्ञोवेदपारगः सत्यवत्संज्ञकेतीर्थेस्नात्वानत्वाजगद्गुरुं ९९७ महांतंननुपंथानंविनिर्गच्छेद्धरिंस्मरन् गव्यूतित्रितयात्पश्चाद्धि
मानमुपतिष्ठते ९९८ वैकुंठवासिभिर्नीतंपूर्वंयेनमृतोयदि मृतश्चोद्दिव्यदेहेनगच्छेद्वैकुंठमूर्जितं ९९९ शिलात्मनोन्रुसिंहस्य
पादपंकजसान्निधौ अधोदकेचसंत्यज्य प्राणान्मुक्तिमवाप्नुयात् १००० तापनीयश्रुतिप्रोक्तमार्गेणान्नभजन्नरः धर्ममर्थंच
कामंचभुक्तिंमुक्तिंचपंचमीं १००१ उपवासत्रयाद्दन्नतद्दद्विष्णुःप्रसीदति श्रीवराहशीलायांचनिषण्णोनिश्चलोमुनिः १००
२ जपन्मंत्रमहोरात्रंसिद्धिंयातिनसंशयः अत्रलक्षंवराहस्यमन्त्रंजपतियःपुमान् ३ अधोदकेमुदातिष्ठन्निंद्राद्यास्तस्य
किंकराः प्राच्यांदिशिशिलायास्तुवाराहतीर्थमुत्तमं ४ तत्रस्नात्वाप्रकुर्वीतजपार्चाहवनादिकं तत्रस्नानंप्रकुर्वाणःषण्मा
संभक्तिनम्रधीः ५ संग्रामेविजयंयातिलभतेचपरायुधं नारदीयशिलायांतुबदरीनायकःस्वयं मुनिःशेषवेदसंगीतंव्याक
रोतिदयानिधिः वत्सरत्रितयादूर्ध्वंवेणुनादंप्रसन्नधीः ७ श्रोष्यत्येवनसंदेहोलब्धेनद्येनसंशयः तार्क्ष्यमुन्नांशिलास्प
स्पर्शाद्विषाद्यैश्चनपीड्यते ८ बिल्वपर्वतनिकटेपातालबिल्वमस्ति तस्यवामभागेगुहापाषाणमुद्रिता तस्यांकश्चिकोवसति ९ निशीथसम
येतत्रचतुर्दश्यांहिकृष्णके पक्षेवैश्रावणेमासेज्योतिर्वैदृश्यतेमहत् १० श्रूयतेकलकलाशब्दः पुण्यैस्तत्प्राप्यदर्शनं ज्योतिर्मयस्तदादेहो

दृश्यते पुण्यकारकैः ११ वीरभद्रेश्वरं दृष्ट्वास्मात्वाचरितीर्थके निराहारः समरात्रं योनरोत्राशिवाश्रितः १२ सर्वान्
कामानवाप्नोति सत्यमेवन संशयः ततोतिनिकटेवामेनिवर्त्तनामितेस्थले १३ मुण्डमालेश्वरीदेवीधनयोत्करशोभिनी यस्या
दर्शनमात्रेणसर्वसिद्धीश्वरो भवेत् १४ नानावाद्यमयाः शब्दाः श्रूयंतेदेवताहृताः तस्मिन्स्थानेतुयोमर्त्योधीरात्मान्
दृढनिश्चयः १५ नानारूपधरास्तत्रदृश्यंतेप्रमथास्त्रियः नकार्याभिस्ततोबिभयद्भैरवेभ्यश्चात्मनः १६ असाध्यमपि
समाह्वात्साधयेत्साधकोत्तमः तस्यदक्षिणतोबिभाशिलापतितमाक्षिक १७ आश्चर्यं दृश्यते तत्र शयनात्पूर्वजन्मजम्
यस्मिन्कुलेचयोनौच जातपूर्वंतपोनिधे १८ जानातिशयनात्तत्र यदि जीवतिमानवः इतिगुह्यतमान्येवकथितानितवा
धुना १९ तत्रशायनाद्बहुधामरणमेव भवेत् यदिजीवतितदाजन्मांतरज्ञानंभवेदित्यर्थः इतिबदरीक्षेत्रकल्पः अतिमंत्रमुचीव
धानादाधायहस्तकर्णचूर्णंच यास्नातिसोहिनरस्यायथपुर्वेषु अपिद्रीर्घायु [illegible] नमोनिनायकायस्वाहा अमृतंरक्ष
२ ममसिद्धिं देहिरुद्रस्यवचनेस्वाहा इतिहस्तिकर्णकल्पः भल्लातकं समादाय क्षीरेणसहपाचयेत् तत्क्षीरं मधुसर्पिभ्यांपिबेन्म
सत्रयावधि वलिपलितनिर्मुक्तोजीवेद्वर्षशतं सुखी २१ इतिभल्लातककल्पः चूर्णीकृत्यपलानिपंचानितरांगंधा २ मनोनित्य
शस्तच्चूर्णं त्रिगुणेचमार्कचरसेछायाविशुष्कीकृतं पश्चाच्चूर्णमिश्रितंत्वा [illegible] पापकं वृद्धोयौवनमेतिमासयुगलपानान्न
रःप्रत्यहं २२ इतिगंधककल्पः अश्वगंधपलान्विंशच्चूर्णयित्वाविचक्षणः वृद्धदारकचूर्णेन [illegible] २३ स्थापयित्वा
घटेदिव्येसर्पिषापरिभाविते भवत्येवचतुर्मासाद्वलिपलितवर्जितः २४ इतिअश्वगंधकल्पः पुनर्नवाजटाचूर्णं पञ्चार्द्धपलसमा
समं मासैकं भक्ष्यभोजीयः सवृद्धस्तरुणायते २५ इतिपुनर्नवाकल्पः [illegible] सर्वरोगविना
शायनिशांतेसपयःपिबेत् २६ अंभसः प्रसृतीनष्टौरवावनुदितेपिबेन् वलीपलितकफान्मुक्तोजीवेद्वर्षशतं सुखी २७ नस्तो
युगलमात्रं प्रातरुत्थायनित्यं पिबतिखलु नरोयो [illegible] वलिपलितविहीनः २८

सर्वरोगैर्विमुक्तः २८ इतिपानीयकल्पः अथवज्रोलीकामिनीकल्पः अथवक्ष्यामिवज्रोलींनिजाविर्भावहितेच्छया क
स्मैचिदर्पिनोदेयागुरुशिष्यक्रमंविना २९ शिष्यायभक्तियुक्तायब्रह्मचर्येतस्वैवलियं ग्रहस्थायप्रदातव्याबिंदुसिद्धिप्रदायिनी
१०३० अथसंसाधनंकुर्याद्वज्रोल्यागुरुणोदितं पूर्वंपंचदशाहानिमिताहार्यःसुसंयमी १०३१ स्निग्धंमृदुमृदुस्वादुक्षीरप्रायंजिते
न्द्रियः हृद्यमूत्रंयोगीमूत्रयन्नानिलंसृजेत् १०३२ याममात्रविलंबेनप्रवाहःपायुलिंगयोः यावदधोधोभावस्तावदभ्या
समाचरेत् १०३३ स्वमूत्रोत्सर्गकालेतुनिकुंच्याकुंच्यबुद्धिमान् अल्पाल्पंचत्यजेद्योगीसावशेषंचरक्षयेत् १०३४ मणिबंधे
ततःकृत्वानलिकाद्विलयंक्रमात् फूत्कुर्यान्मेढ्ररंध्रेतुदशवारंप्रयत्नतः १०३५ पायुंयोनिंमेढ्रवस्तींसम्यगाकुंचयेदपि दशफू
त्कारवृद्धिंतुयावत्पंचशतंचरेत् १०३६ नबिंदुंविसृजेद्योगीयमेन्नारींचयत्नतः पायुयोनिसमेढ्रंवैचालितमाकुंचयेद्बलात्
३७ दशफूत्कारवृद्धिंतुअल्पमल्पंततोयमी लिंगेनरत्वेंदुकालेतुयमनतन्त्रसंमतं ३८ नलिकायांजलंकोष्णंसिंचाचाकुंचये
द्बलात् अल्पमल्पंततोगव्यंदुग्धमाकुंचयेद्यमी ३९ लिंगेनदुग्धंयावद्द्वयदासिध्यतियोगिनः यथेष्टंमैथुनेशक्तिस्तस्यासि
द्धेनदूरतः १०४० बिंदुर्यस्यभवेद्वश्यःसयोगीसर्वपूजितः आनयेत्स्त्रीषोडशकंप्रथमंपुष्पितवशीः ४१ गौरसुंदरसर्वांग्य
स्तासांरक्तबलाद्भगात् मेढ्रेणाकर्षयेद्योगीस्वदेहसंनिविश्यच ४२ मेलयेद्बिंदुनासार्धंदिव्यदेहोभवेन्मुनिः एवंषण्मासयो
गेन वलीपलितवर्जितः ४३ खेचरःप्रसरेद्योगीसाक्षात्कामजयेभवेत् लिंगस्थैर्यंचदार्ढ्यंचबिंदुवृद्धिश्चजायते ४४ अपा
नप्राणयोरैक्यंकुण्डलीबोधनंतथा नाडिशुद्धिश्चवज्रोल्याःफलमेतदुदाहृतं ४५ कुर्यादेकैकमभ्यासमेकैकंमण्डलंतथा
आकुंचनंचयमनंसूर्येवहतिनान्यथा ४६ यएवंवेत्तिवज्रोलींस्त्रीणामपिसहस्रके: भक्तेबिंदुर्ननश्येत ततोमृत्युंजयोभ
वेत् ४७ उत्पत्तिस्थितिसंहारेबिंदुरेकोहिकारणं उभयोर्मेलनाद्याज्जरामरणवर्जितः ४८ सर्वेषांसुखदुःखानिबिन्दुरे
कःकरोतिहि स्त्रीणांभगपतिताद्वंद्वकारणबलाद्वशी ४९ अपानवायुमाकुंच्यरजश्चाकृष्यबुद्धिमान् लिंगनालेनयोगीन्द्रः

स्वशरीरेप्रवेशयेत् १०५० संबोध्यचस्वकं बिंदुं भगांतेलिंगघर्षणं कुर्याद्योगीप्रयत्नेन नतुचन्द्रे कदाचन ५१ भोगेभुक्तेपि मुक्तिःस्यात्सिद्धिश्चैवातियोगिनी योगोक्तानियमाभावेऽथादिनाथप्रभावतः ५२ इतिवज्रोलीकामिनीकल्पः अथ श्वेतार्ककल्पः श्रीभैरवउवाच शृणुदेविरहस्यंवै सुगुप्तंपरमौषधीः अंगुष्ठपर्वमात्रंतुकारयेद्गणनायकं ५३ रक्तपुष्प सहस्रेणपुष्पधूपाक्षतैस्तथा आराध्यगणनाथञ्चनैवेद्येनापियत्नतः ५४ दिनमेकंतुसम्पूज्यमन्त्रेणानेनसुंदरी ॐगणा धिपतयेनमः द्यूतेचव्यवहारेचराजद्वारेतथैवच ५५ जयोभवेन्नसंदेहोयुद्धेचैवतुसर्वदा ततोऽनेनप्रकारेणवाग्वादिनीं चकारयेत् ५६ सारस्वतंभवेत्तस्यनात्रकार्याविचारणा पूर्वोक्तेनविधानेनपूजयेच्चसरस्वतीं ५७ सारस्वतंभवेत्तस्यप्र ज्ञामेधाचजायते मुखबंधकरीशत्रोः सर्वसिद्धिवरप्रदा ५८ ॐह्रींवदवदवाग्वादिन्यैनमः मंत्रेणानेनसम्पूज्यभक्त्या देवींसरस्वतीं अथानेनप्रकारेणभानुपूजांचकारयेत् ५९ पूर्वोक्तेनविधानेनसम्पूज्यैकमनारविं ॐसःसूर्यायनमः प्रसन्नोभवतेसूर्योददातीप्सितमेवच १०६० यस्यहस्तेभवेत्तस्यविजयःसर्वदाध्रुवं तस्यकाष्ठंतुसंघृष्यसहगोरोच नेनरः ६१ अंगमुद्वर्तयेत्तस्यसौभाग्यजननंपरं तस्यकाष्ठंकरेबद्धमर्कसूत्रेणवेष्टयेत् ६२ मैथुनेक्रियमाणेतुशुक्रस्त भोभिजायते तस्यक्षीरंसंगृह्यव्रणेकुष्ठस्यलेपयेत् ६३ तत्क्षणान्नश्यतेकुष्ठमितितेनात्रसंशयः तस्यक्षीरंतुसंगृह्यसू तकेनतुमर्दयेत् ६४ एकविंशाहिनेचैवसेवयेद्यो विचक्षणः वलिपलितनिर्मुक्तोजरामरणवर्जितः ६५ नवनागबलस्तस्यस र्वज्ञोविजयीभवेत् तस्यमन्त्रंतुसंगृह्यपद्मसूत्रेणवेष्टयेत् ६६ नरतैलेनप्रज्वाल्यश्मशानाग्नौविचक्षणः पश्यतेतुनिधानां नितथान्वैवबिलासिच ६७ निर्विघ्नंभवतितस्यदीपस्यास्यप्रभावतः बीजंतस्यतुसंगृह्यसूक्ष्मचूर्णंतुकारयेत् ६८ रोचनांचै वकाश्मरीतिलकंकारयेद्बुधः राजातुभवनेवश्यस्तिलकस्यप्रभावतः ६९ बीजचूर्णंतुसंगृह्यघृतेनमधुनासह पिबेच्चैवत तःप्राज्ञोमासमेकंयतव्रतः १०७० वलिपलितनिर्मुक्तोदिव्यदेहोभिजायते पंचांगंतस्यसंगृह्यछायाशुष्कंतुकारयेत् ७१

सूक्ष्मचूर्णंततःकृत्वाबिडालपदमात्रतः सर्वरोगविनिर्मुक्तःसर्वव्याधिविवर्जितः १०७२ नवनागबलंतस्यकान्त्यासूर्यइवापरः सह
स्त्रापुर्भवेद्धापिदिव्यरूपवरवपुकृतिः ७३ षण्मासस्यप्रयोगेणअजरश्चामरोभवेत् क्षीरहारंतुभुक्त्वैवंवातपित्तविवर्जितः ७४ कट्वम्ल
तीक्ष्णविरसकषायक्षारवर्जितः एवमेवंविधानेनसर्वसिद्धिर्भविष्यति ७५ इतिश्वेतार्ककल्पः अथश्वेतागिरिकार्णिकाकल्पः
ओषधीकथितापूर्वंब्रह्मणातुमहात्मना धनदातुसपुण्यासासावित्रीब्रह्मनिर्मिता ७६ अनयासर्वकार्याणिकुर्यादेवाविचारयत् ज
यातुविजयाचैवसुरगादैत्यमोहिनी ७७ अपराजिताचलोकेस्मिन्विख्यातागिरिकार्णिका नामाभिस्तुसमाख्यातानारदेनमहात्मना
७८ पुष्येसमुद्धृतायत्नाद्विजयातुशुभावहा हस्तेनोद्धृत्यग्राह्यातुतथैवसुसमाहिताः ७९ दक्षेपुंसस्तुवैवश्यास्त्रियोवैवामपा
णिना सुसंकीर्णेशुचिस्थानेनित्यमेवनिधापयेत् १०८० पुष्यकालेतुपुष्पाणिबीजंचैवतुसंग्रहेत् चन्द्रसूर्यप्रयोगेणमूलमुत्पाद्य
यत्नतः ८१ कृष्णाष्टम्यांचतुर्दश्यांमहादेवस्यसन्निधौ शुक्लवासाःशुचिर्भूत्वाकाषायपरिपोषितः ८२ ततोदीर्घंप्रकुर्वन्तिछाया
शुष्कंतुकारयेत् ललाटेतिलकंकृत्वायंयंपश्यन्निरीक्षयेत् ८३ दृष्टिमात्रेणतस्याशुप्रजातिष्ठतिदासवत् नरनारीसहस्त्राणिदृष्ट्वामू
र्ध्निविशेषकं ८४ आत्मनादासभावेनयावज्जीवंभजन्त्यसौ उद्धरेत्क्षणिकांप्राज्ञोवश्यतामेतिवैरवकः ८५ दृष्टिगोचरमापन्नामनोहरतिदे
वता किंपुनर्मानुषाःक्षुद्रामासमात्रोपजीविनः सक्षणाद्राजपुरुषाआत्ताकुर्वन्तिदासवत् ८६ संग्रामेशत्रुसंघातेकाण्डवारणमुत्तमं मोह
पत्यरिसैन्यानिमुख्यसख्यामहोदधिः ८७ सर्वदुष्टभयंनास्तिजलमध्येस्थलेऽपिच प्रयोगंतुमहागुह्यंस्त्रीणांसौभाग्यवर्धनं ८८ अंग-
स्योद्वर्तनंकृत्वाईप्सितामेवमोहयेत् नरंतमुपजीवन्तियावज्जीवंनसंशयः ८९ कथितंनिखिलंसर्वंदुर्भगानांशुभावहं त्रैलोक्यसुंदरी
नामस्वयमेवमुमापतौ १०९० मयापिशंकरस्यार्धेअंगलेपःकृतोनया तदाभवातिरुद्रेणनान्यास्त्रीमनसावृता ९१ एकस्त्रीचेतिवि
ख्याताशंकरस्यार्धदेहिनी अतःपरंनास्तियोगंयोगिनांयोगमुत्तमं ९२ समाभिमंत्रितंकृत्वायोदद्यात्सर्वसिद्धिदं समंत्रंसर्वकार्ये
षुसंक्षेपेणमहात्मनः ९३ ॐअमृतेअमृत प्रभेसर्वसिद्धेश्वरी असितप्रभेस्वाहा ९४ इतिश्वेतागिरिकार्णिकाकल्पः अथमयू

राशिखाकल्पः  मूलावर्त्तीमयूरशिखासहादेवीकुमारिकामधुसर्पिणाच  कंठमालिनीभयाविपघ्नीगौरभासुभगामयूरशिखाः १०
१५ पुष्यनक्षत्रेगृह्यबालानांकंठेबध्वाग्रहभूतशाकिनीभयंनभवति १६ धूपंदद्याद्भूतज्वरंनाशयति १७ तस्यामूलंशिरसिबध्वा
राजकुलेव्यवहारेचविजयोभवति १८ शत्रुद्वारेनिक्षिप्तेउच्चाटनंभवति १९ हस्तेबध्वाआत्मनोपमृत्युंनाशयति ११०० सहदातव्य
वश्योभवति सर्पेनदष्टस्यघृतेनसहदेयंतस्यनिर्विषोभवति १ मधुनासहभक्षयेत्श्रुतिधरोभवति ११०२  इतिमयूरशिखाकल्पः
अथकृष्णधत्तूरकल्पः  कृष्णाष्टम्यां कृष्णचतुर्दश्यां कनकबीजानि संग्रह्य तगर कनकबीजं कुष्ठं देवदारुंच एतानिसमभागा
निचूर्णंकृत्वा यस्यशिरसिदीयतेवशीभवति ११०३ कनकबीजं हरितालं मनःशिला कुष्ठं तगरं समभागानि कारयेत् चूर्णं कृत्वा
यस्याशिरसिदीयते सवशीभवति ४ कनकबीजं सैंधवं मरिचं पिप्पली विडंगानि मधुनासहपेषयेत् लेपोऽयंवशंकरः ५ कनक
बीजं गोरोचनं नागकेसरं प्रियंगु मंजनं एतैरंजितनेत्रोयंयंपश्यति ससवश्योभवति ६ कनकबीजं मदनफलं अपामार्गस्य तंदुल
एतानि लेपयित्वा सप्तदिनानि तस्योपरि मूत्रयेत् तच्चूर्णं खानेपानेप्रदातव्यंताबूलादौ सवश्योभवति ७ कनकबीजं शतपुष्पाप्रियंगु
हिंगुलं तथा आत्मानं धूपयेत् यआघ्रातिसवश्योभवति ८ कनकबीजं श्वेतसर्षपा रक्तकरवीरपुष्पं गोरोचनं मनःशिला एभिस्ति
लकं जगद्वश्यंकरोति ९ पूगीफलंकनकं मध्ये प्रक्षिप्य स्वमूत्रेण मर्दयेत्तिलकंभवति १११० कृष्णवंदकमादायकृष्णकनकमेवच सैंधवे
नसमायुक्तमात्ममूत्रेणपेषयेत् ११ समाहृधारयेद्भूमौसमुद्धृत्यविचक्षणः खानेपानेप्रदातव्यंतस्यवश्योभवेच्चसः १२ कृष्णाष्टम्यांच
तुर्दश्यामहोरात्रोपोषितोभूत्वारुद्रस्यमहतींपूजांकृत्वा दक्षिणमुखेऽष्टसाहस्रंजपेत्ततः सिध्यतिमन्त्रः १३ अथमन्त्रः ॐनमोभ
गवतेरुद्रायपाहिलि २ चं हुं मातंगाय स्वाहा १११४  अथदेवदालीकल्पः  देवदालीरसंचैवश्वेतसर्षपसंयुतं लक्ष्मणासंयुतंचैव
कन्याहस्तेनपेषयेत् १५ गुटिकांतांततःकृत्वा हस्तेबध्वाथमूर्ध्निवा संभाषयतियानारींराजानंशत्रुमेवच १६ वश्याभवन्तितेसर्वेई
प्सितं चापिकुर्वते नहिसर्पभयंतस्यनचराजकुलाद्भयं १७ नचचोरभयंतस्यअरण्येपिसमेऽपिवा देवदालीरसंग्रह्यसमूलफलपत्र

कां छायाशुष्कंततः कृत्वालक्ष्मणायासमान्वितं यस्मैप्रदीयतेवश्योआत्मनाचधनेनच १९ स्त्रीणांशिरसिदातव्यंपुरुषस्यचवामे
ये मस्तकेयस्यतच्चूर्णंयावज्जीवमसौवशः ॥२० धनंधान्यंसदातेषुयस्यच्चूर्णंग्रहेवसेत् यस्यप्रकीर्यतेक्षेत्रेवर्धतेतद्दाननं २१ उप
द्रव्याश्चक्रमयोनभवंतिकदाचन देवदालीरसंगृह्यविष्णुक्रांतासमान्वितं २२ बन्धनंपारदंचैवतारंहेमंकरोतिच देवदालीरसंग्रह्य
गन्धपाषाणमेवच २३ द्रावयेत्सर्वलोहानिपारदंचैवबन्धयेत् पारदेनचसंयुक्तंहेमंभवतिशोभनं २४ देवदालीरसंचैवकेलकीरस
संयुतं आक्षिणीअंजयेत्तेनदिव्यदृष्टिःप्रजायते॥निशाचराणांसत्वानांद्दष्योरेकरातिपुनः देवदालीरसंचैवमधुयुक्तंव्रजेद्बुधः २६ त
तः सार्षीघ्रतांदेविअयुतैःसर्वकामिका ॐ नमोभगवतिमहावीरे ईशाने अमृतसंभवे सर्वभूतवशंकर्य्यैस्वाहा २७ ॐ देवदालि
महावीर्येसर्वशत्रुविनाशिनी शिरसि २८ ॐ नमोमाहेश्वरिमहाबलेहनुभे स्वाहा शिखायां २९ ॐ अमृतगर्भेरक्षरक्षन
मः स्वाहा कवचायहुं ३० ॐ त्रयोतेजोमालिनीविद्युत्साक्षीजिव्हेस्वाहा नेत्रयोः ३१ ॐ देवदालीसर्वभूतसिद्धिदायि ॐमहाब
लेसर्वभूतवासिनीहुंफट् अस्त्रं ॥३२ इतिदेवदालीकल्पः अथसहदेवीकल्पः कृष्णाष्टम्यांकृष्णचतुर्दश्यांसंग्रह्य ॐ
नमोभगवतिमाहेश्वरीसर्वमनोहारिणी सर्वकालवशंकरी सर्वमुखरंजनी चित्रासनी सर्वेषां महामातंगीकौमारीसकलजनवश्यंकु
रुकुरुस्वाहा ॥३३ अनेनमन्त्रेणसप्तवाराभिमंत्रितेनखदिरकीलकंसप्ताभिमंत्रितंकृत्वा रात्रौपश्चिमेयामेमुक्तकेशोदिगंबरईशा
नाभिमुखोभूत्वागृण्हीयात्सिद्धिर्भवति ॥३४ इतिसहदेवीमंत्रविधिः तंदुलेनसहदातव्यंवश्योभवति ३५ सप्तरात्रस्तनेलेपये
त्सवश्योभवति ३६ गोरोचनयासहतिलकंकरोतिजगद्वश्यंभवति ३७ मनःशिलासहाक्षिणीअंजयित्वायंयंनिरीक्षतेसस्रवश्योभ
वति ३८ खानपानेप्रदातव्यंसवश्योभवति ३९ मधुनापिष्ट्वाभगलेपेनसततंपुरुषमिच्छति ॥४० चंदनेसहालिप्यहस्तेनयांयां
स्पृशतिसासावश्याभवति ४१ नारीणांकंठेबध्वासुखप्रसवति ४२ यस्यगंधआयातिसवश्योभवति ४३ शिरसिधार्यतेसर्वमध्येअधि
कोभवति ४४ सर्वजनप्रियोभवति ४५ कंठेधारयेद्भूतज्वरंनाशयति ४६ बालानांकंठेबध्वागण्डमालांनाशयति ४७ आक्षिरोगंनाश

यति ४८ कटिंबध्वाअतीसारंनाशयति ४९ घृतेनसहभक्षयेत्प्रगल्भोभवति ११५० मुखेप्रक्षिप्यविवादेजयोभवति ५१ शिरसिधा
रयेद्रणेजयोभवति ५२ कटिंबध्वास्त्रीवश्याभवति ५३ वस्त्रांचलेर्बध्वासर्वकार्यसिद्धिर्भवति ११५४ इतिसहदेवीकल्पः अथब्र
ह्मदण्डीकल्पः ब्रह्मदण्डीतिविख्याताअधःपुष्पीतुनामतः तस्याभेदद्वयंप्रोक्तंश्वेताकृष्णातथैवच ११५५ श्वेताप्रोक्तातुवश्यार्थेकृ
ष्णाउच्चाटनेतथा आश्विनेकार्त्तिकेचैवगृह्यमाणस्तुबुद्धिमान् ५६ विलेपनंततःकृत्वागुग्गुलुनातुधूपयेत् वश्यार्थेरक्तसूत्रेणकृष्णे
नोच्चाटनेतथा ५७ शुक्लपक्षेतुवश्यार्थेकृष्णेउच्चाटनेतथा ब्रह्मदण्डीनिमूलानिमहालिंगीयुतानिच ५८ पुष्यर्क्षेतुसंग्राह्यआत्मर
क्तेनभावितं खानेपानप्रदातव्यास्त्रीणांहृदयधारिणी ५९ ब्रह्मदण्डीयमूलानिगोरभासुसमान्वितं आत्मरक्तेनसंयुक्तंस्त्रीणांहृदय
हारिणी १०६० ब्रह्मदण्डीकुमारीचआत्मरक्तेनभावयेत् स्त्रीणांभाषितमात्रेणवशीभवतितत्क्षणात् ६१ ब्रह्मदण्डीचिताभस्मरु
धिरांम्बुसमन्वितं अहिशीर्षिकाशरोमाणिअश्वासीरेणप्रक्षिपेत् ६२ द्वारेविनिक्षिपेद्यस्यदूरदेशंसगच्छति बृहतीचाश्वगन्धाच
ब्रह्मदण्डीसमन्विता ६३ नवनीतेनसंलिप्तंलिंगंचाश्वप्रमाणकं एतेनवृद्धिमायांतिनारीणांचपयोधराः ६४ ब्रह्मदण्डीमूलंकृष्ण
सूत्रेणबध्वातृतीयज्वरंनाशयति ६५ ब्रह्मदण्डीयमूलंतुनिर्गुण्डीरसभावितं यस्ययस्यप्रदीयेतपिशाचाभूतराक्षसाः ६६ शाकि
न्योनाशमायांतिरुद्रस्यवचनंयथा ब्रह्मदण्डीचिताभस्मकाकरक्तेनभावितं चूर्णंशिरसिदातव्यंउच्चाटयतितत्क्षणात् ११६७ इ
तिब्रह्मदण्डीकल्पः अथाश्वगंधाकल्पः त्रैलोक्यरक्षिणीह्येषासर्वसिद्धिकरीसदा देवदानवगंधर्वयक्षसिद्धोरगास्तथा
६८ दिव्योषधिप्रभावेणअंतर्धानंगतास्तुते पलानिसप्ताश्वगन्धातालीसाष्टपलानिच ६९ गुडस्याष्टपलंदेविमोदकान्कारयेद्बुधः
त्रिदिनंप्रातरुत्थायएकैकंभक्षयेद्बुधः ११७० भोजनंषाष्टिकोपेतंक्षीरंमुद्गरसंपिबेत् मुखंतुजायतेवध्वंशतपत्रसमप्रभं ११७१ चू
र्णंचैवाश्वगंधायाधात्र्याश्चरसभावितं ज्येष्ठीमधुसमायुक्तंमधुनासहलेहयेत्७२मासद्वयप्रयोगेणवलीपालितवर्जितः योजनाना
शतंगच्छेच्छ्रमंतस्यनविद्यते ७३ अश्वगंधाफलंग्राह्यसूक्ष्मचूर्णंतुकारयेत् शतावरीफलंचैवपलमेकंतुभक्षयेत् ७४ तेनभाक्षि

तमात्रेणवलिपलितवर्जितः अश्वगन्धातुसंग्रह्यचीरातोयेनपेषयेत् ७५ अक्षिणीअंजयेदेवंसद्यास्तिमिरनाशनं चिपिटंपटलंपुष्पंनी
लिकानेवनाशयेत ७६ अश्वगंधातुसंग्रह्यमातुलिंगरसेपचेत् गोमूत्रेणसमायुक्तंमासमेकंतुभक्षयेत् ७७ गात्रमालेपयेच्चैवसर्वकु
ष्ठानिहन्तिवै मेधावीश्रुतिमांश्चैवकिन्नरैःसहगीयते ७८ समानकृतचूर्णंतुमासमेकंतुभक्षयेत् दृढकायोभवेच्चैववलीपलितवर्जि
तः ७९ अश्वगन्धाफलंग्रह्यशर्करांचसमन्वितं मासमात्रप्रयोगेणवृद्धोभवतियौवनः ११८० अश्वगन्धातिलामाषामधुनासहसंयु
ता सार्धमासप्रयोगेणकुंजरैःसहयुध्यते ११८१ नवनागसमोवीर्यैवेगेनतुरगोपमः ११८२ इति अश्वगंधाकल्पः अथलक्ष्मणा
कल्पः संग्रह्यलक्ष्मणामूलंरक्तचन्दनसंयुतं यंयंप्रदापयेज्जंतुःससवश्योभवेत्ध्रुवं ८३ संग्रह्यलक्ष्मणामूलंकुष्ठनागरकेसरं वि
लेपनमिदंयस्ययावज्जीवंवशीभवेत् ८४ लक्ष्मणामूलंतगरंघृष्यललाटेतिलकंकृत्वासर्वजनप्रियोभवति ८५ ॐनमोमहेश्वराय
सर्वजनवश्यंकुरुकुरुस्वाहा ८६ लक्ष्मणामूलंसुवीराजनसमत्वेननेत्रेअंजयेत् यंयंपश्यतिससवश्योभवति ८७ ॐजयाविज
यास्वाहा लक्ष्मणामूलंरक्तचंदनेनआत्मानंधूपयेज्जनप्रियोभवति ८८ लक्ष्मणामूलंपिष्टातिलाक्षीरेणसहदीयते अर्शोनाशयति
८९ लक्ष्मणाब्राह्मीघृतेनसहपिबेत् वालग्रहंनाशयति ९० ॐनमोभगवतेतोमरेश्वरायस्वाहा लक्ष्मणामूलंशिरसिवध्दंचौर-
व्याघ्रभयंनाशयति ११९१ लक्ष्मणामूलंहस्तेवध्दंअपराजितोभवति ९२ ॐहरिहरायस्वाहा लक्ष्मणामूलंआत्मनासममालभ्य
सर्वजनप्रियोभवति ९३ ॐवश्यंमेस्वाहा लक्ष्मणामूलंमनःशिलोदकेनसंघृष्यतिलकंकृत्वाराजकुलंव्रजेत् राजावशीभवति
११९४ इति लक्ष्मणाकल्पः अथमूशलीकल्पः मुशलीबलवीर्यंचमहाव्याधिविनाशिनी नमस्तस्यैप्रवक्ष्यामिनहि
जानंतिसाधकाः ११९५ सुवर्णपुष्पागौरीचमुशलीपूगपत्रिका नारायणीक्षीरवहानमाभःसाश्रुभामता ९६ ततःकर्माणिकुर्वी
तविज्ञायचमहामते पुष्पस्यचप्रयोगेणवलीपलितवर्जितः ९७ अथवाज्यप्रयोगेणभ्रशंकुष्ठविनाशनं अनेनाविधिनाभक्षंव
लंतस्यविवर्धते ९८ तेनैवसहसंयुक्तागुल्मव्याधिविनाशिनी विषूचिकाविरेकादिनश्यतेनात्रसंशयः ९९ गोधूमचूर्णभागौद्वौ

मुशलीभागमेवच घृतचूर्णतुतंकृत्वामधुभांडेनशोधनं १२०० सप्तरात्रप्रयोगेणसर्वव्याधिविनाशनं गोनसवृश्चिकादिदष्टेतंदु
लाभसाभवतिनिर्विषय: १२०१ मनःशिलासहपीत्वाकासंश्वासंचनाशयेत् घृतेनसहापिबेत्पयसावागंडमालांनाशयति २ उद
केनपिष्टंगोशृंगंलेपयेत्कामंनाशयति जानुगुल्फपादांगुष्टंलेपयेत्क्रमयोनश्यन्ति ३ शुभदिनेपुष्यसंयोगेनउत्पाट्यसर्वशुभदा
भवति ४ घृतेनसहितंयःपिबेत्सचिरंजीवीभवति ५ तस्याश्चूर्णघृतमधुवटिकांकृत्वाभक्षयेत् एकविंशतिदिनानिमध्येशतंस्त्रीणांका
मयति ६ तच्चूर्णआर्द्रकरसेनपिबेद्रुधिरकुष्टंनाशयति ७ त्रिफलाचूर्णेनसहापिबेद्रक्तपित्तंनाशयति ८ तच्चूर्णंकटुतैलेनसहपिबेत्स्था
वरंजंगमंचविषंनाशयति ९ तच्चूर्णंचित्रकेनसहपिबेत् कुष्टरोगंनाशयति १२१० तच्चूर्णंनागकेसरेणसहापिबेज्जरामरणंनाशयति ११
तच्चूर्णंचूतरसेनसहपिबेदश्मरीरोगंनाशयति १२ तच्चूर्णंकांजिकरसेनसहपिबेन्निद्राहीनाशयति १३ तच्चूर्णंदधिमधुसहपिबेत् रुजं
नाशयति १४ तच्चूर्णंजलेनसहपिबेत्तृतीयज्वरंनाशयति १५ तच्चूर्णदुग्धेनसह।पिबेदश्मकरोगंनाशयति १६ तच्चूर्णघृतेनसहपि
बेदिन्द्रियाणांबलंनाशयति १७ तच्चूर्णंनालिकेररसेनसहपिबेच्छिरोरोगंनाशयति १८ तच्चूर्णंतिलतैलेनसहपिबेत् श्लेष्माणंनाशय
ति १९ तच्चूर्णंसूरणरसेनसहपिबेत् उदररोगंनाशयति १२२० तच्चूर्णंलक्ष्मणयासहपिबेद्वंध्यायांपुत्रो भवति २१ तच्चूर्णंत्रिकटुकेनसह
पिबेत्कुरुंडंनाशयति २२ तच्चूर्णंभृंगराजरसेनसहपिबेत्सर्वव्याधिंनाशयति २३ तच्चूर्णउदुंबररसेनसहपिबेन्निष्टारोगंनाशयति २
४ तच्चूर्णमजामूत्रेणसहपिबेद्वलिपलितंनाशयति २५ तच्चूर्णधामनरसेनपिबेदधःप्रकरोभवति २६ तच्चूर्णवाचीरसेनसहपि
बेद्बधिरोभद्रोभवति २७ तच्चूर्णंमूलकेनसहमूकस्यवाग्भवति २८ तच्चूर्णंभसासहपिबेत्कालविषंनाशयति तच्चूर्णंटंकनेनसह
पिबेत्कालदष्ट्रोजीवति १२२९ इतिमुशलीकल्प: अथताम्रवनकल्प: अशीटीलापलंदह्यवनेईश्वरदेवस्याग्रतोगंगासंग-
म: तत्ररक्तमृत्तिकातिष्ठति १२३० तांगृहीत्वा तथाशुद्धतारंवेशयित्वापचेत्कनकंभवति १२३१ च्यवनेश्वरपार्श्वेमेपांडवतडागि
कातिष्ठति ३२ तस्यामध्येखन्यमानउषाकर्दम:प्राप्यते तद्ध्तरपाकेनधम्यमानतारंभवति ३३ तत्रच्यवनेश्वरनैऋत्यादिशायांद

धिस्थलंनामपर्वतास्ति १२३४ तत्रपर्वतेचत्वारिवारिणिसन्ति प्रथमेचन्द्रोदकंतिष्ठति द्वितीयेदुर्गन्धातिष्ठति तृतीयेविषोदकंतिष्ठति चतु
र्थेशंखाकृतयःपाषाणास्तिष्ठन्ति १२३५ छायावृक्षकृष्णामलकीचातिष्ठति ३५ देवस्यमहतींपूजांकृत्वासर्वमेतात्सिध्यति ३७ इतिताम्र
वनकल्पः अथकरहाटकेमयूरगिरिकल्पः अस्तिदक्षिणापथेकरहाटंनामपत्तनंतस्यपश्चिमदिग्भागेमयूरगिरिपर्वतास्तिष्ठति
१२३८ नानामुनिजनाकीर्णंसिद्धगन्धर्वसेवितं तस्यदक्षिणादिग्भागेवटवृक्षसमीपेतुविवरशोभनपरंश्मकराक्रातिश्वतद्वारंप्रसिद्धं.
लोकविश्रुतं नमन्त्रंनचहोमोस्तिविघ्नंनैवप्रजायते १२४० यत्रलेपर्वैःहीनत्वंयथामातृग्रहंविशेत् तथाचतत्रप्रविशेन्नभयंनविभीषकाः
४१ गत्वांबिकायासान्निध्यमात्मरक्षांतुकारयेत् निर्विकल्पैःप्रवेष्टव्यमेकाग्रचित्तैर्जितेन्द्रियैः ४२ तत्रक्रोशान्तरंगत्वामलकीतत्रदृश्यते
तस्यांमदाक्षिणांकृत्वाभिक्षांदेहीतियाचयेत् ४३ प्रत्येकंसाधकानांचसहस्त्रपततेफलं तत्रगत्वाफलंभक्षेत्सहस्त्रायुर्भवेन्नरः ४४सर्व
व्याधिविनिर्मुक्तोवलीपलितवर्जितः अथतंनरोचतेयदाधन्वंतरद्वयंगत्वाकल्पवृक्षंचपश्यति ४५ नित्यपुष्पफलाढ्योतौसाधकानां
हितायवै यंयंप्रार्थयतेकामंतंतंददातिसाधकं ४६ अथवातंनरोचेतासिद्धद्रव्याणिपश्यति वज्रवैडूर्यरत्नानिपद्मरागांश्चपश्यति ४७
रक्तंकूपंततःपश्येत्सहस्त्रवेधकारकं अलाबुकेसरंग्राह्यमागच्छेत्साधकोत्तमः ४८ रसंदृशपलंभक्षेत्सर्वकामार्थसाधकं यंयंकाम
यतेकामंतंतंप्राप्नोतिमानवः ४९ अथवातन्नरोचेतव्रजेद्धन्वंतरद्वयं नित्यंपुष्पफलोपेतंसपश्येन्नंदनवनं १२५० विश्रामंतत्रकुर्वन्ति
सुगंधिवनमध्यतः वनदक्षिणदिग्भागेपद्मरागाणिसंतिहि १२५१ पश्चिमेदृश्यतेवज्रमिन्द्रनीलंतथोत्तरे तत्पूर्वेणाशिलाहेमीगन्धपा
षाणमोचनं १२५२ खड्गंचिन्तामणिंपश्येत्पादुकांजनमेवच इंगुदीकंवैडूर्यंयज्ञोपवीतंचदृश्यते ५३ हरीतकीगन्धयुक्तांसिद्धद्रव्यंच
पश्यति एकैकंरोचतेयस्यसाधकस्यपृथक्पृथक् ५४ सिद्धद्रव्यैश्चसर्वैश्चविद्याधरपदंलभेत् जीवेत्पंचशतंकल्पमथवात्रिदशाजी
वितं ५५ शिवलोकंव्रजेत्सोवैब्रह्मलोकंव्रजेदपि अथवातन्नरोचेतपुरंगच्छेत्ससाधकः ५६ तत्रगत्वातुसंपश्येत्प्रसिद्धंहाटकेश्वरं
भक्त्याचत्रीणिवाराणिकृत्वादेवंप्रदक्षिणं ५७ देवालयंशुचिर्भूत्वाप्रविशेत्साधकोत्तमः नमस्कृत्वातुदेवेशंपूजयित्वासदाशिवम् ५८

देवस्यपुरोभेरीहेमदण्डेनभाण्डयेत् तेनैवताडिताभेरीतयासंक्षोभितंपुरं ५९ पुरान्निर्गत्यलाकन्यास्वागतंवाक्यमब्रुवेत् साधुसा
धुकृतंवीरत्वयावैपुरुषर्षभ १२६० रसोरसायनंकिंवास्पर्शवेधीतुदीयते यद्यदिच्छेन्मनसातत्सर्वंतवदीयते ६१ साधकउवाच रसं
रसायनंचैवस्पर्शवेधीतथैवच भुंजतेतत्पुरेभद्रे तेनाहमिहमागतः ६२ चन्द्रमत्युवाच तदेतद्वचनंश्रुत्वास्वपुरंयातुकन्यका गत्वा
वदंतुताःकन्याशीघ्रमागम्यतामिति ६३ यावदागमनंतावत्त्रतिष्ठतुसाधकाः तिष्ठंतिकन्यकासातुस्यन्नपुरनिवासिनी ६४ शंखदुंदु
भिनिर्घोषवंशवीणामनोरमैः गरुडासनमारूढाश्वेतछत्रसमान्विता ६५ द्विरष्टवर्षाकृतयोजरामृत्युविवर्जिताः साधकस्यसमीपंता
आगच्छंतुसुकन्यकाः ६६ श्रुत्वातद्वचनंतासांसाधकस्ययशस्विनी हस्तंग्रह्यपुरंगच्छसाधकात्विदमब्रुवन् ६७ अनेकशतसाहस्रै
कन्यकैःपरिवेष्टितः गीतवाद्यनिनादेनगच्छतेसाधकोत्तमः ६८ प्रविष्टस्तत्पुरंदिव्यंमहासिंहासनेस्थितः विवाहंचततःकुर्यात्
चन्द्रमत्यासमंतदा ६९ पृच्छतेगोत्रवरणंदेशकालप्रवर्त्तनं तत्सर्वंलिख्यतेपत्रेनामतस्यपृथक्पृथक् १२७० रसंरसायनंचैवदद्यते
वाम्रतंफलं तास्मिंश्चपीतमात्रेणमूर्च्छांचायातिसाधकः १२७१ उत्तिष्ठतेमुहूर्त्तेनब्रह्मविष्णुवाहमब्रवीत् बलोद्रिक्तामहातेजाः
सर्वमात्मानिमन्यते १२७२ दृष्ट्वातंजल्पमानंतुबोधयंतिसुकन्यकाः पूर्वोक्तपत्रदर्शनाच्छातोभवतिनान्यथा ७३ भुंक्तेचविविधा
न्भोगान्कन्यकैःसहसाधकः ब्रह्मायुर्वसतेस्वर्गेपुनर्यातिशिवालयं ७४ इतिकरहाटकेमयूरगिरिविवरकल्पः अथगन्धक
कल्पः श्रीदेव्युवाच गन्धकस्यविधिंदेवकथयस्वप्रसादतः कास्मिन्कालेसमुत्पन्नःकेनचोत्पादितःपुरा ७५ अल्पायुश्च
येमर्त्याजरादारिद्रपीडिताः तेषांहितायपरमंगुह्यंतंकथयप्रभो ७६ ईश्वरउवाच शृणुदेविप्रवक्ष्यामियथोत्पन्नस्तुगन्धकः तम
हंसंप्रवक्ष्यामिशृणुष्वायतलोचने ७७ क्षीरोदसागरेदेविमथ्यमानेवरानने उत्पन्नोगन्धकस्तत्रादिव्यरूपसमान्वितः ७८ तद्गन्धक
स्यचगन्धेनमोहिताःसर्वदेवताः गन्धकेतिसमाख्यातोनाम्नालोकेबभूवह ७९ तस्यवर्णाहिजानीहित्रिविधंचारुलोचने पीतंचैव
तथाश्वेतंकपोतंचतृतीयकं १२८० क्रमादुत्तममध्याख्यहीनाख्यंचयथाक्रमं तदेवंगन्धकंज्ञात्वाशुद्धदेहःसमाचरेत् ८१ शुभेह-

निसुनक्षत्रेपूजयित्वावृषध्वजं विधानेनैवतद्दिव्यंकर्त्तव्यंदेविनित्यशः ८२ भोजनानिचवक्ष्यामिभक्ष्यमाणानियानिच षष्टीक
मथवाशाल्योगोधूमाश्चविशेषतः ८३ छागलानिचमांसानिसदापथ्यानिदेहिनां यावन्मुद्गांश्चभुंजीतक्षीरंमधुतथाघृतं ८४ एत
द्देविसदापथ्यंवर्जयेत्साधकःसदा अतितीक्ष्णकषायानितैलंकांजिकमेवच ८५ लवणाम्लंचशाकंचद्विदलान्नंविवर्जयेत् स्त्री
सेवारोहणंयानंपरिहार्यंतुनित्यशः ८६ वादनंताडनंचैवछेदनंचतृतीयकं सिद्धिजीवितकामेनवर्जनीयानियत्नतः ८७ अमृतं
चविषंचैवकान्तसूतकगन्धकं अमृतंविधिसंयुक्तंविधिहीनस्तुतद्विषं ८८ यस्तंभक्षयतेदेविसाधकःसिद्धिकांक्षया समूढोगंधकंप्राप्यक्रंयाति
यमालयं आदौचगन्धकंग्राह्यंयन्नवैडूर्यसन्निभं तस्यमंत्रंप्रवक्ष्याम्यमृतीकरणपर ८९ ॐजूंसः अमृतायामृतशक्तयेमृत
गन्धोपजीवने: दानवेन्द्राणाज्ञस्वामृतंकुरुमांस्वाहा ॐजूंसःइतिमन्त्रः १२९० वातारितैलसंयुक्तंत्रिफलागुग्गुलेनच गन्ध
कंभक्षयेत्प्राज्ञोजरादारिद्र्यनाशनं १२९१ एकमासप्रयोगेणशृणुवक्ष्यामियत्फलं हंत्यष्टादशकुष्ठानिसप्तचैकेमहाक्षयः ९२
वातगुल्मानिप्लीहानिभगंदरंतथैवच अशीतिर्वातजान्रोगान्रक्तदोषांश्चनाशयेत् ९३ श्वासकासातिसारांश्चतथान्यान्पित्तरु
णात् ज्वरकोलकलूतांश्चहन्तिदिव्यंरसायनं ९४ षण्मासस्यप्रयोगेणशृणुवक्ष्यामितेगुणाः हंसवर्णाश्चयेकेशावलयश्चावलंबि
ताः ९५ पुनर्यौवनमायांतिभ्रमराइवमूर्धजाः गृध्रदृष्टिर्महाप्राणोवाराहइवश्रोत्रधृक् ९६ जायतेनात्रसंदेहोद्वितीयइवशंकरः
तस्यमूत्रपुरीषेणशुल्वंभवतिकांचनं ९७ गन्धकस्यपलैकंतुरसस्यार्धपलंतथा अन्धमूखागतंध्वांतंभक्षयेन्मधुसर्पिषा ९८ मा
सस्यैकप्रयोगेणपूर्वोक्तंलभतेफलं मासेकक्रमविध्यातुभक्षयेद्घृतसंयुतं ९९ मासमात्रोपयोगेनजरादारिद्र्यनाशनं संवत्सरप्र
योगेणराजरामोभवेन्नरः १३०० गव्यंघृतंपलंचैकंतदर्धंनचगन्धकं मासमेकंप्रभुंजानोदिव्यदेहोभिजायते १ कांचनस्ययथा
रूपंद्विमासाभ्यंतरेणतु त्रिभिश्चमासैर्जायेतकामरूपोमहाबलः २ दिव्यदृष्टिःप्रवर्त्तेतचतुर्भिस्तुनसंशयः एवंमासानुसारेण
कर्त्तव्यंचविचक्षणैः ३ संवत्सरप्रयोगेणजीवेच्चन्द्रार्कतारकं गन्धकंत्रिफलाचैवभृंगराजंतथैवच ४ समभागान्वितंकृत्वाभक्ष

येच्चविचक्षण: संवत्सरप्रयोगेणजीवेच्चन्द्रार्कतारकं १३०५ गन्धकस्यपलान्यंचसूतस्यैकंपलंतथा गगनस्यपलैकंचकन्यायाश्व
पलत्रयं ६ माक्षिकस्यपलंत्रीणिखंडंचापिद्विसप्तकं षण्मासस्यप्रयोगेणदिव्यदृष्टि:प्रजायते ७ गन्धकंरससंयुक्तंनिर्गुण्डीरसभा॰
वितं अंधमूकाकृतंध्वांतंसर्वदुष्टनिवारणं ८ अवध्य:सर्वभूतानांद्वितीयइवशंकर: गन्धकस्यपलंचैकंरसस्यापिपलंतथा ९ कन्याया
श्चपलंत्रीणिलसुनस्यपलत्रयं अभिषेकंतुखण्डस्यषण्मासस्यतुयुंजनात् १३१० दिव्यदृष्टि:प्रवर्त्तेतजीवेश्चन्द्रार्कतारकं गन्धकाभ्रर॰
संचैवनिर्गुण्डीरसभावितं १३११ कर्षमभ्रंचक्षारेणसप्तवारंतुभावयेत् अन्धमुखाक्षतंध्वान्तंजरादारिद्र्यनाशनं १२ गन्धकंजारपि
ष्टीचरसबीजेनमर्द्दयेत् भूमिस्थंमासमेकंतुधारयेत्तुविचक्षण: १३ अंधमूकाकृतध्वान्तंतारलेपनकांचनं आरूढंभक्षयेन्नित्यं
बलतेजोविवर्धनं १४ गन्धकंत्रिपलायुक्तंदिव्यदृष्टि:प्रजायते एतदुद्वर्त्तनेनापिसर्वकुष्ठविनाशनं १५ घृतेनसहसंयुक्तंब्रह्मरोह॰
णमुत्तमं तैलेनचसमायुक्तंपिटकानांविनाशनं १६ दुग्धेनसहपीतेनसहस्रायुर्भवेन्नर: कान्तयुक्तेनचन्द्रेणसर्वलोहस्यद्राव॰
णं १७ काचमीचीयुतेचैकंसूतकंमारईष्यति काचमाख्यायुतंगंधंदद्रुनाशयतेध्रुवं १८ गन्धपाषाणगन्धेनआयसंचैवयोजयेत्
मिलितेसर्वलोहानिद्रवंतेसलिलंयथा १९ गन्धकंरसकंताप्यंपारदंरक्तचंदनं गन्धकंगैरिकायुक्तंसप्तभागेनसूतकं १३२० देव
दालीसमायुक्तंशुल्बमायातिकांचनं श्वेताभ्रंगन्धकंसूतंदरदंद्रव्यपंचकं १३२१ वज्रीक्षीरसमायुक्तंवंगंस्तंभयतेक्षणात् पुनर्नवायु
तंगन्धंनाशयेत्त्रिविधंविषं २२ गवांघृतेनपीत्वातुतरंगंनाशयेत्क्षणात् एरंडतैलसंयुक्तंग्रहणीव्याधिनाशिनी २३ लोहेनसहपी॰
त्वातुपाण्डुरोगविनाशनं दाडिमेनसमायुक्तमतीसारविनाशनं २४ गुडेनसहितंपीतंपामांनाशयतेक्षणात् कमलफलेनसंयुक्तं
उन्मादंनाशयेद्ध्रुवं २५ बहुनात्रकिमुक्तेनघृतेनसहगन्धकं षण्मासस्यप्रयोगेणजरादारिद्र्यनाशनं २६ पीतेनगन्धकेनैवरसंतां
बूलमर्द्दितं मारयेत्ताम्रपात्राणिविश्रान्तेलेपयेत्सुधी: २७ अरण्योपलपाकेनशीतलंभावयेत्स्वयं निर्बीजंचसमाख्यातंहेमंभवति
शोभनं २८ किमत्रचित्रंयदिपीतगन्धकंपलाशसंवेष्टितकल्पमार्द्दितं अरण्यकक्षोपलपाचितंशुभंकरोतितारंत्रिपुटेनकांचनं २९

पयसाघृतेनमधुनातैलेनहन्तिदोषांश्चगन्धकः क्रमेणकदल्यपामार्गतिलमोक्षकक्षाराश्चत्वारः १२३० कान्चरंकणचूर्णेनकृत्वा
पामार्गकदलीरसेनप्रलेपयेत् वज्राण्येकविंशतिवाराणि अधरोत्तरचूर्णेनदोषस्वेदेनवज्राणिद्रवन्तिगगनंचविशेषतः १२३१
इतिगन्धककल्पः अथातारक्तवज्रीकल्पंव्याख्यास्यामः दृष्टुंचैवतरुंदिव्यंवज्रीरूपेणसंस्थितं विधनंतद्द्रवंरक्तंगृहीत्वा
त्कटुतुंबके ३२ कान्तवीर्येणसन्तत्रहेमपादेनजारितं मर्दयेत्तंचरक्तेनघटिकात्रीणिबुद्धिमान् ३३ अंधमूषातततःक्षिप्त्वाधमेत्तं
खदिराग्निना स्थीयंतेमूषवामध्येतंगृहीत्वामुखेक्षिपेत् ३४ तत्क्षणात्खेचरीसिद्धिरसदेहस्तुतत्क्षणात् अथवारुधिरंग्रत्यपारदंतें
नमर्दयेत ३५ भक्षयेत्कर्षमात्रंतुमूर्छातस्यप्रजायेत ततोविद्याधरोभूत्वानिःक्रामतिविचक्षणः ३६ अथवासूतकंदेवितेनरक्तेनमर्दये-
त् यावत्संजायतेपिंडंधमापयेत्खादिराग्निना ३७ स्थीयतेनिर्विकल्पंचतेनताम्रंप्रलेपयेत् तद्भावात्पुटपाकेनकांचनंदोषवर्जितं
३८ अथतंभक्षयेत्सूतंचूर्णंकृत्वातुबुद्धिमान् सप्तकत्रयमात्रंतुएकविंशतिमेदिने ३९ ततःशरीरमास्थायब्रह्मतुल्यस्तुजायते
१२४० इतिरक्तवज्रीकल्पः अथातःकूष्मांडीकल्पः अस्तिकोंकणविषयसमीपे आर्याभगवतीनामदेवीतस्याःपूर्वोत्तरेण
गुह्या धन्वंतरोस्त्रिभिरस्तितत्रकूष्मांडीनामऔषधीतिष्ठति १२४१ लोकानांशरीरहितकारिणीसद्भावेनप्रथमंतस्याःपत्रंहस्तेनम
र्दयेत् ४२ तत्पत्रात्सिंदूरवर्णोहस्तोभवतिनिश्चितं एवंहिप्रत्ययंदृष्ट्वालोहंप्रलेपयेद्बुधः ४३ वह्निमध्येक्षिपेत्तेतुदहेत्तीव्रेणवह्नि
ना जायतेकांचनंदिव्यंदेवाभरणभूषितं ४४ तदौषधिरसंग्रत्यपारदंतेनमर्दयेत् शुल्वपत्राणिसंग्रह्यघर्मस्थानेनिधापयेत् ४५ दि
नानिसप्तचोत्धृत्यपुटयाकेनदाहयेत् दिव्यौषधिप्रयोगेणकनकंशोभनंपरं ४६ एवंतंप्रत्ययंदृष्ट्वामासमेकंतुभक्षयेत् कामदेववः
पुःश्रीमान्भवतेनात्रसंशयः ४७ स्त्रीचैवपुरुषोवापिषण्मासाद्व्याधिवर्जितं शब्देनकुरुतेनाशंरसायनमिदंपरं ४८ द्वादशाब्देन
कल्पायुर्भवतेनात्रसंशयः औषधीभक्षणेपथ्यामजादुग्धेनभोजनं ४९ तदौषध्यारसंस्ततस्तेनवंगंपुटेत्पुनः म्रियतेतद्द्रवंवंगंसह
स्रांशेनवेधकं १२५० तस्यामूलंशिखायांबध्वासर्वशास्त्रविशारदोभवति ५१ तदौषधीमूलंशिरसिबद्धंजलंस्तंभयति ५२ कूष्मां

